## ॥ व्याप्त्यनुगममूलम् ॥



उक्तव्याप्तिप्रकारेष्वन्योन्याभावगर्भैव व्याप्तिरनुमितिहेतुर्लाघवात् अतो नाननुगमः । अनौपाधिकत्वं तल्लक्षणं नन्वेवमुपाधिरसिद्ध्युपजीव्यत्वेन व्यभिचारवद्धेत्वाभासान्तरं स्यात् नतु व्याप्त्यभावत्वेनासिद्धिरिति चेन्न नहि तज्ज्ञानमुपजीव्यमपि स्वतो दूषकं नह्यन्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानमन्यस्य साध्यव्याप्यत्वज्ञाने प्रतिबन्धकमतिप्रसक्तेः व्यभिचाराज्ञानस्य तद्धेतुत्वात् तद्धीस्तथा, नचानौपाधिकत्वज्ञानं व्याप्तिज्ञाने हेतुरित्युक्तं, तथा च व्यभिचारज्ञानद्वारा स दूषकः एवञ्च परमुखनिरीक्षकतया सिद्धसाधनवन्न पृथक्, न चैवमव्यभिचारस्य व्याप्तित्वे व्यभिचारस्तदभावत्वेनासिद्धिः स्यादितिवाच्यं, साध्याभाववद्वृत्तित्वं हि व्यभिचारस्तदभावश्च नाव्यभिचारः केवलान्वयिन्यभावात् । किन्तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसामानाधिकरण्यं । नचानयोः परस्परविरहरूपत्वमिति ॥

इति व्याप्त्यनुगममूलं समाप्तम् ।

# ॥ व्याप्त्यनुगमदीधितिः ॥

श्रीशिवाय नमः ।

उक्तऽयाप्तीति । प्रतियोग्यसामानाधिकरण्यादिविशेषणविर-हेण लाघवात् । अथ संयोगाभावस्यैव संयोगवद्भेदस्यापि हेतु-सामानाधिकरण्यग्रहेऽप्यनुमितिदर्शनात्तत्रापि क्व लाघवं । न-न्वेवं प्रतियोग्यसामानाधिकरण्याद्यनुपस्थितौ हेतुसमानाधिकर णाभावप्रतियोगितानवच्छेदकत्वग्रहेऽप्यनुमितिर्न स्यात् नच प्र-तियोगिसमानाधिकरणत्वेनाज्ञायमाना यावन्तो हेतुसमाना-धिकरणा अभावास्तत्प्रतियोगितावच्छेदकत्वाभावग्रहो हेतुरिति वाच्यं तादृशाभावग्रहोऽपि न हेतुसमानाधिकरणाभावप्रतियो-गितावच्छेदकत्वत्वेन रूपेण, प्रतियोगिसमानाधिकरणतादृशा-भावप्रतियोगितावच्छेदकत्वग्रहे तदसम्भवात्, नापि प्रातिस्वि-करूपेण, जन्मसहस्रेणाप्यसम्भवात्, नापि रूपान्तरेण, वह्नित्वाव-च्छिन्नप्रतियोगिताकाभावस्य धूमसामानाधिकरण्यभ्रमेऽपि वह्नि-त्वानवच्छिन्नप्रतियोगिताकधूमसमानाधिकरणनिखिलाभावप्रति-योगितानवच्छेदकं वह्नित्वमिति ज्ञानादप्यनुमितिप्रसङ्गात् नच हेतुसमानाधिकरणत्वेन ज्ञायमाना इतिवाच्यं वह्नित्वे धूमसमा-नाधिकरणरासभाद्यभावप्रतियोगितावच्छेदकत्वभ्रमेऽप्युक्तरूपेण त-थाग्रहसम्भवात्, धूमाधिकरणान्तरानुपस्थितौ वह्नित्वे रासभत्वादौ

च तादृशप्रमोत्पादेऽपि रासभादेरिव वह्नेरप्यननुमानाच्च एवं वह्नित्वावच्छेदेन शुक्लत्वाभावभ्रमदशायां शुक्लप्रतियोगिका वह्नीतरप्रतियोगिकाश्च ये धूमसमानाधिकरणाभावास्तत्प्रतियोगितानवच्छेदकं वह्नित्वमिति ग्रहेऽपि। मैवं प्रतियोग्यसमानाधिकरणहेतुसमानाधिकरणाभाव प्रतियोगितावच्छेदकत्वग्रहविरोधिग्रहविषयत्वेन तेषां तादृशावच्छेदकत्वग्रहविरोधित्वेन तद्बुद्धीनांवाऽनुगमात्। विरुणद्धि च सामान्याभावबोधोऽपि सामान्यघटितविशेषवत्ताबुद्धिं सत्यां हि घटो नास्तीति बुद्धौ जात्वपि नीलोघटोऽस्तीति बोधानुदयात् तत्कस्य हेतोः तद्विशिष्टप्रतियोगिसत्ताबुद्धिं प्रति तदवच्छिन्नप्रतियोगिताकाभाव बुद्धेर्विरोधित्वात् अवगाहते च नीलघटवत्ताबुद्धिरपि घटत्वविशिष्टतद्वत्तां अतएवावच्छेदक तद्वयोरन्योन्यात्यन्ताभावबोधयोरुपसंग्रहः हेत्वाभासे च वक्ष्यमाणः रीतिरिहाप्यनुसन्धेया यदिच साध्यतावच्छेदकस्याभावप्रतियोगितानवच्छेदकत्वादिग्रहान्नानुमितिस्तदा तादृशावच्छेदकत्वग्रहाविरोधित्वेन विशेषणीयं, अन्योन्याभावस्याऽव्याप्यवृत्तितापत्ते तु सुतरां विशेषणदानमिति, सत्यं तथाप्यन्योन्याभावे प्रतियोग्यवृत्तित्वस्यैव विशेषणत्वं नवा प्रतियोगितावच्छेदकसम्बन्धभेदानुधावनमतो लाघवमिति यथाश्रुतग्रन्थानुरोधिनः। अपरेतु अन्योन्यात्यन्ताभावगर्भव्याप्त्योरेकतराग्रहेऽन्यतरग्रहादनुमितेरानुभविकत्वात् तदुभयज्ञानमेव हेतुः, इन्द्रियसंयोगादिवच्च विशिष्यैवकार्य्यकारणभावान्न व्यभिचारः। यत्तु-यद्रूपावच्छिन्नप्रतियोगिकत्वेनोपस्थितो ऽभावो धर्म्मिणि गृह्यमाणः साध्यवत्त्वबुद्धिं विरुणद्धि तद्रूपावच्छिन्नप्रतियोगिताकाभावसामानाधिकरण्यावगाहिनो ग्रहस्य विरोधित्वेन व्या-

प्तिबुद्धयोऽनुगमनोयाः प्रतिबध्नीतञ्च साध्यतद्वदत्यन्तान्योन्या-
भावग्रहौ साध्यवत्त्वाबुद्धिं, केवलान्वयिस्थलेच भ्रमरूपस्यैव तद्ग्र-
हस्य कथञ्चित्प्रसिद्धिरिति तच्चिन्त्यं। साध्यतावच्छेदके साधन-
समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वावगाही साध्य
तावच्छेदकावच्छिन्नसाध्यवत्त्वेच साधनसमानाधिकरणान्योन्या-
भावप्रतियोगितावच्छेदकत्वावगाही यो ग्रहस्तद्विरोधित्वं साध्या-
भाववद्वृत्तित्वसाध्यवदन्यवृत्तित्वोभयावगाहिग्रहविरोधित्वादिकं
वानुगमकं वाच्यं केवलान्वयिनि प्रसिद्धिः पूर्व्ववत् अधिकंहेत्वा-
भासलक्षणरीत्या बोध्यम्। ग्रन्थस्तूपलक्षणपरो ऽनौपाधिकत्व-
मात्रव्यवच्छेदाय यद्वक्ष्यति अनौपाधिकत्वन्तु तल्लक्षणमिति वद-
न्ति। व्यभिचाराज्ञानस्य व्याप्तिधीहेतुत्वात् साक्षाद्व्याप्तिग्रहप्रति-
बन्धकग्रहविषयत्वेन व्यभिचारस्याभासत्वं सोपाधित्वज्ञानन्तु न
साक्षात्द्व्याप्तिधीविरोधि विरोध्यविषयत्वात् किन्तु व्यभिचार-
ज्ञानद्वारा, वक्ष्यते चानुमितेस्तत्कारणज्ञानस्य वा साक्षाद्विरोधिन
एवाभासत्वं निरुपाधित्वस्य ज्ञानन्तु न व्याप्तिधीहेतुः मानाभा-
वात्तथात्वेऽप्युपाधेराभासत्वायोगाच्च। इदं पुनरवधेयं यदन्यो-
न्याभावस्याव्याप्यवृत्तित्वे प्रतियोग्यवृत्तित्वविशेषित तद्घटित
लक्षणस्य संयोगादिसाध्यकव्यभिचारिण्यतिव्याप्तिः। संयोगान्यो-
न्याभावस्य केवलान्वयित्वात्। अथ व्याप्यवृत्तिसाध्यके स्वव्यापक-
साध्यसामानाधिकरण्यमेव व्याप्तिः अव्याप्यवृत्तिसंयोगादिसाध्य-
केतु स्वव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकात्यन्ताभावेन
तादृशरूपविशिष्टावच्छिन्नप्रतियोगिताकान्योन्याभावेन वा सम-
मसामानाधिकरण्यमिति चेत् स्मृतिसंस्कारजन्यज्ञानविषयत्वा-
दिकेवलान्वयिसाध्यकेषु का गतिः अथ स्वाधिकरणयत्किञ्चिद्व्य-

त्तिवृत्तिधर्म्मानवच्छिन्नप्रतियोगिताकान्योन्याभावप्रतियोगितानवच्छेदकसाध्यवत्त्वकत्वं यद्धर्म्मविशिष्टयत्किञ्चिदधिकरणवृत्तिधर्म्मानवच्छिन्नप्रतियोगिताकान्योन्याभावप्रतियोगितानवच्छेदकसाध्यवत्त्वकत्वे सति तद्धर्म्मविशिष्टत्वं वा चेति चेदत्र किं यया कयाचित्सम्बन्धेन तदधिकरणवृत्तित्वं विवक्षितं साध्यतावच्छेदकसम्बन्धेन वा, आद्ये गुणः स्पन्दत्वादित्यत्रातिव्याप्तिः गुणत्वस्य स्वरूपसम्बन्धेन स्पन्दवृत्तितया तद्वत्त्वस्य स्पन्दनिष्ठताद्दृशान्योन्याभावप्रतियोगितानवच्छेदकत्वात्। द्वितीये समवायेन जातिः साध्यत्वे मेयत्वादावतिव्याप्तिः जातिमन्मेयव्यक्तिनिष्ठताद्दृशान्योन्याभावप्रतियोगितायाः जातिमत्त्वेनानवच्छेदाज्जातिशून्यमेयव्यक्तौ समवायेन वर्त्तमानस्याप्रसिद्धत्वात्। एतेन ग्रहो व्याख्यातः। तथात्वेऽत्यन्ताभावगर्भमपि दुर्व्वचं। तथाहि प्रतियोग्यनधिकरणीभूतहेत्वधिकरणनिष्ठात्यन्ताभावेत्यादिगर्भमव्यापकमेव। संयोगादिसाध्यकद्रव्यत्वादौ, स्वाधिकरणीभूतयत्किञ्चिद्द्रव्यवृत्तिप्रतियोगिकात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसमानाधिकरणहेतुत्वमित्यत्रापि पूर्व्ववत् गुणः स्पन्दत्वात् जातिमान् मेयत्वादित्यत्रातिव्याप्तिः, एवं स्वप्रतियोगिनिष्ठाधेयत्वानिरूपकहेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसमानाधिकरणहेतुत्वमित्यत्रापि उत्पत्तिकालावच्छेदेन जन्यानां द्रव्यानां अजन्यानाञ्च प्रलयावच्छेदेन वा संयोगनिष्ठाधेयत्वानिरूपकत्वोपगमे संयोगसाध्यकद्रव्यत्वे कालपरिमाणेच हेतावव्याप्तिः कृतं पल्लवितेन। अत्र वदन्ति साध्यसमानाधिकरणतत्सम्बन्धावच्छिन्नाभावप्रतियोगितान-

वच्छेदकत्वव्यापक--स्वसमानाधिकरण तत्सम्बन्धावच्छिन्नाभावप्रतियोगितानवच्छेदकत्वकत्वं । स्वसमानाधिकरणतत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वव्यापक—--साध्यसमानाधिकरणतत्सम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वकत्वं वा । स्वसमानाधिकरणाः सर्व्वे यद्धर्म्मावच्छिन्नसमानाधिकरणास्तद्धर्म्मावलीढ़सामानाधिकरण्यं । साध्यसामानाधिकरण्याभावव्यापकतावच्छेदकस्वसामानाधिकरण्यसामान्याभावत्वकत्वं वा व्याप्तिः । अत्र च साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणं हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणं तद्वृत्तित्वद्वयञ्च एकेन सम्बन्धेन विशेषणताविशेषेण वा बोध्यं ।

इति व्याप्त्यनुगमदीधितिः समाप्ता ।

---

## ॥ अथ व्याप्त्यनुगमजागदीशी टीका ॥

नमः शिवाय । प्रतियोग्यसमानाधिकरणत्वादीत्यादिपदेन निष्कृष्टार्थस्य हेत्वधिकरणे प्रतियोग्यनधिकरणत्वविशेषणस्य

---

कृष्णात्रेयमहावंशे सार्व्वभौमोपनामकः । मूलग्रामनिवास्यासीत् शिवचन्द्रः शिवप्रभः ॥१॥ वाचस्पत्युपाधिकश्च, गङ्गाधरस्तदात्मजः । तत्तनयो महेश्वरन्यायवागीशतार्किकः ॥ २ ॥ तस्य पुत्रोजितेन्द्रियः क्रियावान् कर्म्मवित्सुधीः । राजेन्द्रचन्द्रो राजेन्द्रपूजिताङ्घ्रिद्वयाब्जकः ॥ ३ ॥ न्यायपञ्चाननख्याति रामगोपालधीमता । तत्तनुजेन तपसा लब्ध्वा कीर्त्तिं गते दिवि ॥४॥ तर्कव्याकरणाङ्गवेद-कविता-वेदान्तसाङ्ख्यावली मीमांसाचयसंहिताभिरभितः शास्त्रैश्च युक्त्यादिभिः । ध्वस्तत्रयनिरूपणाहतमनःपापण्डगर्व्वावलिः काशीश्वरमन्दिरे शिवमना देवीच शक्तिङ्गतः ॥५॥ न्यायभूषणोपनामचन्द्रशेखरस्तदात्मजः । भारते सुश्रमोग्रस्य रवेरंशुरिवाभवत् ॥ ६ ॥ राधाकृ-

परिग्रहः। तत्रापि। अन्योन्याभावव्याप्तिग्रहेऽपि। तदिति। प्रतियोगिनस्तादात्म्येन यः सम्बन्धो तदवृत्तित्वादिरूपं (१) प्रतियोग्यसामानाधिकरण्यादिकं (२) विषयतया प्रवेश्यमित्यर्थः। तटस्थः शङ्कते नन्वेवमिति। प्रतियोगिवैयधिकरण्यविषयकत्वान्तर्भावेन हेतुत्वे। उपाध्यायमतमाशङ्क्य निषिध्यति नचेति। हेतुसन्निष्ठघटाद्यभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिग्रहादपि वह्निमान् रासभादित्यादावनुमित्यनुत्पत्त्यर्थं यावन्त इति (३)

---

न्तस्तदग्रजोधार्म्मिकस्तन्त्रशास्त्रवित्। दत्तमन्त्रानघशिष्यः लीलावद्दृष्टधूर्ज्जटिः॥ ७॥ विदाम्वरोऽध्यापितदुर्गतर्को दिङ्मण्डलव्यक्तयशोदयाचित् शिवेति कालीति सदा प्रभाषी जितेन्द्रियोधर्म्मवचोऽनुरक्तः॥ ८॥ तर्कालङ्कारविख्यातरामकुमारनामकः राज्ञा गोपाललालेन स्थापितस्तत्सुतः शुचिः॥ ९॥ तस्य पुत्राः पञ्च जाताः प्रथमस्तर्कशास्त्रवित् कालीनाथतर्करत्नो ज्योतिर्व्वित् सुतपाः सुधीः॥ १०॥ गौरीनाथो द्वितीयश्च ज्योतिर्व्विद्धार्म्मिकःशुचिः। चतुर्थपञ्चमौ पुत्रौ दिवङ्गतौ विपश्चितौ॥ ११॥ तृतीयस्तपसा श्रेष्ठस्तन्त्रमन्त्रविशारदः। श्रीप्रसन्नचन्द्रनामा सरलो दम्भवर्ज्जितः॥ १२॥ तदात्मजो, राजमणीति नाम्नी तपोवरिष्ठा च सतीगरीष्ठा। प्रसन्नचिन्ता जननी हि यस्य स तर्कवागीशकनामलब्धः॥१३॥ समालोक्य पुस्तकस्थां पूर्व्वलोकेन निर्म्मितां। टीप्पणीं स्वकृतां काञ्चित् अन्नदाचरणः श्रिया॥ १४॥ कारं कारं सुवन् य ज्जगदिदममलं विश्वसृग्विश्वकर्त्ता स्मारंस्मारं सुसारं स्मरहरचरणं निर्ज्जराराध्यमाद्यं। विघ्नाशङ्काङ्कुरघ्नं सुदलितदुरितं तत् प्रभानामटीकां ध्यात्वा रुद्राङ्घ्रिचित्तो रचयति विदुषां तोषबीजं यथाधि॥ १५॥

---

## ॥ अथ प्रभा ॥

नमो गणेशाय।

१। आदिना तद्वृत्तिभिन्नत्वाद्युपग्रहः।

२। अत्रादिना प्रतियोगिनस्तादात्म्येनासम्बन्धित्वेऽधिकरणवृत्तित्वादिकं बोध्यं तेन संयोगी सत्त्वादित्यादौ गुणे संयोगवद्भेदस्य लक्षणघटकतया नातिव्याप्तिः।

३। गगनादिहेतुके साध्यसामानाधिकरण्याभावादेवानुमित्यनुत्पत्तिरिति रासभहेतौ रुपन्यासः।

तादृशाभाव इति। निरुक्तावच्छेदकत्वाभावग्रहो हीत्यर्थः (४) तदसम्भवात्। हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं संयोगत्वमित्यादिग्रहासम्भवात्। सामान्यघटितविशेषवत्तानिश्चयस्यापि सामान्याभावबुद्धौ विरोधित्वादिति भावः। प्रातिस्विकेति। तत्तदभावप्रतियोगितावच्छेदकत्वस्वरूपेणेत्यर्थः (५) रूपान्तरेणेति। हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वघटितेनेत्यादिः। तेन मेयत्वादिना तद्ग्रहान्नातिप्रसङ्गः (६) भ्रमेऽपीत्यन्तमिष्टापत्तिव्युदासाय नचेति। तथा च वह्न्यभावस्यापि हेतुसमानाधिकरणत्वेन ज्ञायमानत्वात्तत्प्रतियोगितानवच्छेदकत्वाग्रहादेव तदा नानुमितिरिति भावः। उक्तरूपेणेति। वह्नित्वानवच्छिन्नधूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वरूपेणेत्यर्थः। सम्भवादिति। समानप्रकारकत्वेनैव ज्ञानस्य विरोधि-

---

४। अत्र लक्षणे प्रतियोगिसमानाधिकरणत्वेनाज्ञायमानत्वविशेषणमुपलक्षणतयैव निविश्यते उपलक्षणतया विशेषणस्थले तत्सामानाधिकरण्यमात्रं कारणतावच्छेदककोटौ निविष्टं नतु तद्विषयत्वमपि तथाच सामानाधिकरण्यसम्बन्धेन प्रतियोगिसमानाधिकरणत्वेनाज्ञायमानत्वविशिष्टहेत्वधिकरणवृत्त्यभावत्वव्यापिका या साध्यतावच्छेदकविषयता तन्निरूपकज्ञानत्वेन कारणत्वं, व्यापकत्वञ्च हेत्वधिकरणवृत्तित्वविषयतानिरूपिता या स्वनिरूपिताभावविषयतानिरूपितावच्छेदकत्वविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितविषयता तदतासम्बन्धेन तेन हेत्वधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वाभावकूटावगाहिज्ञानस्य तादृशावच्छेदकत्वसामान्याभावावगाहिज्ञानस्य च संग्रहः स्वपदं साध्यतावच्छेदकविषयतापरं।

५। अथ प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वह्नित्वमितिज्ञानादनुमित्यनुपपत्ति स्तादृशज्ञानस्य निरुक्तयावदभावान्तर्गतपिपीलिकासंयोगाद्यभावानवगाहितया कारणत्वाभावात् मैवं प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावत्वरूपेण तादृशयावदभावस्य निविष्टतया तादृशाभावत्वावच्छिन्नयावदभावनिष्ठविषयताकज्ञानस्य कारणत्वादुक्तज्ञानस्यकारणत्वात्।

६। मेयाभाववत्साध्यतावच्छेदकमिति ग्रहादनुमित्यापत्तिरूपातिप्रसङ्गोऽयः।

त्वात् तथा च ततोऽप्यनुमितिः स्यादिति भावः। ननु प्राचां मते समानविषयत्वेनैव ज्ञानस्य विरोधित्वाद्वह्नित्वे धूमवन्निष्ठरासभाभावप्रतियोगितावच्छेदकत्वग्रहदशायां वह्नित्वानवच्छिन्नधूमवन्निष्ठाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ग्रह एवासम्भवीत्यतोदोषान्तरमाह धूमाधिकरणेति। रासभशून्यधूमाधिकरणानुपस्थितावित्यर्थः, तादृशेति। रासभत्वं धूमवन्निष्ठरासभत्वानवच्छिन्नाभावप्रतियोगितानवच्छेदकं, वह्नित्वं धूमवन्निष्ठवह्नित्वानवच्छिन्नाभावप्रतियोगितानवच्छेदकमित्येवं प्रमोत्पादेऽपीत्यर्थः। रासभशून्यधूमाधिकरणोपस्थितिदशायां रासभत्वे निरुक्तानवच्छेदकत्वं दुर्ग्रहमतोऽनुपस्थिताविल्यन्तं। उक्तज्ञानादनुमितौ कदाचिदिष्टापत्तिं कुर्य्यादित्यतोदोषान्तरमाह एवमिति। वह्नेः शुक्लत्वग्रहे वह्न्यभावस्यापि शुक्लप्रतियोगिकत्वग्रहसम्भवाद्वह्नित्वं धूमवन्निष्ठशुक्लप्रतियोगिकाभावप्रतियोगितानवच्छेदकमित्येवं ग्रहो न सम्भवतीति भ्रमदशायामित्यन्तं। शुक्लप्रतियोगिकात्वेन वह्न्यभावस्य, वह्नीतरप्रतियोगिकेत्यनेन रासभाद्यभावस्य निरुक्तयावदन्तर्गतस्य संग्रहः (७) ग्रहेऽपीति। अननुमाना-

७। साध्यावृत्तितादृशप्रतियोगितानिवेशे न शुक्लप्रतियोगिकाभावमादायदोष इति वह्नीतराभावानुधावनं॥ अत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वघटितेन रूपान्तरेण तादृशप्रतियोगितावच्छेदकत्वाभावावगाहिज्ञानं कारणमित्युक्तौ व्यभिचारग्रहात्मक-वह्न्यभावस्य धूमसामानाधिकरण्यभ्रमदशायां वह्नित्वानवच्छिन्नधूमसमानाधिकरणनिखिलाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानादनुमित्यापत्तिः, यद्यपि हेतुसमानाधिकरणपदेन हेतुसमानाधिकरणत्वेन ज्ञायमानत्वमर्थोवाच्यस्तदा वह्नित्वे धूमसमानाधिकरणरासभाभावप्रतियोगितावच्छेदकत्वभ्रमदशायां वह्नित्वानवच्छिन्नधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानादनुमित्यापत्तिः समानविषयकत्वेन प्रतिबन्धकत्वमते व्यभिचारग्रहात्मकताहृशभ्रमदशायां वह्नित्वानवच्छिन्नधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति

चेत्यनुषज्यते तथा च तत्राप्यनुमितिः स्यादिति भावः। इदमुपलक्षणं। ज्ञायमानत्वाज्ञायमानत्वयोः सामान्यतः प्रवेशेऽतिप्रसङ्गः (८) तत्तत्काले तत्तत्पुरुषज्ञायमानत्वप्रवेशे तु प्रतियो-

---

ज्ञागं न भवतीति नानुमित्यापत्तिरतोरासभशून्यधूमाधिकरणानुपस्थितौ वह्नित्वं वह्नित्वानवच्छिन्नधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकमिति ज्ञानादनुमित्यापत्तिर्दीयते नन्वत्र व्यभिचारग्रहाभावादिष्टापत्तिरतोवह्नौ गुरुत्वाभावभ्रमदशायां हेतुसमानाधिकरणगुरुप्रतियोगिकाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानादनुमित्यापत्तिरिति शिरोमणिमतानुसारेण जगदीशाशयः॥ ० ।

ननु चरमदोषाभिधानमप्ययुक्तमिष्टापत्तौ बाधकाभावात् चेन्न गुरुप्रतियोगिका इत्यनेन व्यभिचारभ्रमदशायामापत्तेः सूचितत्वात्, अथ प्राचां मते समानविषयकज्ञानस्य प्रतिबन्धकत्वं तन्मतमाश्रित्य पूर्व्वदोषो न भवति इत्याशङ्क्य चरमदोषावतारात् समानविषयकज्ञानस्य विरोधित्वमताभिप्रायेणैवापत्तिर्दातव्या अन्यथा चरमदोषाभिसन्धानं वायसदशनानुसन्धानसमानं स्यादेवञ्चेद्वह्नित्वं धूमसमानाधिकरणत्वेन ज्ञायमानवह्न्यभावप्रतियोगितावच्छेदकमिति ज्ञानदशायां हेतुसमानाधिकरणगुरुप्रतियोगिकाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानमेव न सम्भवति समानविषयकत्वेनोक्तज्ञानस्यैतज्ज्ञानप्रतिबन्धकत्वात्, मैवं यथा घटाभावबुद्धौ समानविषयकत्वेन प्रतिबन्धकत्वमतेऽपि घटोन द्रव्यमिति निश्चयकाले द्रव्यत्वेन घटवत्ताबुद्धेरनुभवसिद्धमविरोधित्वमिति प्राचांमते घटोन द्रव्यमिति निश्चयाभाववैशिष्ट्यं प्रतिबन्धकतावच्छेदककोटौ निवेशनीयं तथात्रापि वह्नित्वं गुरुप्रतियोगिकाभावप्रतियोगितानवच्छेदकमित्याकारकबुद्धिं प्रति वह्नौ गुरुत्वाभावनिश्चयविशिष्ट वह्न्यभावप्रतियोगितावच्छेदकं वह्नित्वमिति निश्चयस्य प्रतिबन्धकतया एतज्ज्ञानस्याप्रतिबन्धकत्वात् एतदनन्तरं तज्ज्ञानसम्भवादिति ध्येयं।

८। प्रतियोगिसमानाधिकरणत्वेन ज्ञायमानसामान्यभिन्नत्वनिवेशे साध्यतावच्छेदके प्रतियोगिव्यधिकरणहेतुसमानाधिकरणप्रतियोगितावच्छेदकत्वभ्रमोत्तरं कालान्तरे एतत्पुरुषस्य एतत्काले वा पुरुषान्तरस्य संयोगाभावे प्रतियोगिसमानाधिकरणत्वेन ज्ञायमानत्वसत्त्वेन प्रतियोगिसमानाधिकरणत्वेनाज्ञायमानहेतुसमानाधिकरणाभाव प्रतियोगितानवच्छेदकं संयोगत्वमिति ज्ञानादनुमित्यापत्तिरूपः-हेतुसमानाधिकरणत्वेन ज्ञायमानत्वस्य सामान्यतः प्रवेशे वह्न्यभावे हेतुसामानाधिकरण्यभ्रमोत्तरं दिनान्तरव्याजेन वह्नित्वं हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकमिति ज्ञानादनुमित्यनुपपत्तिः अनुमितेः पूर्व्वं हेतुसमानाधिकरणत्वेन

गिसामानाधिकरण्यानुपस्थितिकालीनव्याप्तिग्रहासंग्रहः (९) पुरुषकालाद्यननुगमादनुगतहेतुत्वालाभश्चेत्यपिद्रष्टव्यं । नन्वेवमित्यत्र सिद्धान्तो मैवमिति । तेषामिति । प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकभेद-तत्त्वात्यन्ताभावानामित्यर्थः । ननु तादृशग्रहविरोधिग्रहविषयस्य तत्तदभावस्य यदि ज्ञानमात्रं हेतुस्तदा प्रमेयत्वादिनापि तस्य ज्ञानादनुमित्यापत्तिः तत्तद्रूपेण ज्ञानस्य हेतुत्वेऽननुगमतादवस्थ्यमित्यत आह तादृशावच्छेदक-

---

वह्न्यभावस्य ज्ञायमानतया हेतुसमानाधिकरणत्वेन ज्ञायमानाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानानुदयात् अतो यत्किञ्चित् कालावच्छेदेन हेतुसमानाधिकरणत्वेन ज्ञायमाना यावन्तोऽभावास्तत्प्रतियोगितावच्छेदकत्वाभावावगाहिज्ञानं कारणं वक्तव्यं एवञ्चेत् वह्न्यभावे हेतुसामानाधिकरण्यभ्रमेऽपि तादृशभ्रमशून्यतत्कालीनहेतुसमानाधिकरणत्वेन ज्ञायमानयावदभावप्रतियोगितावच्छेदकत्वाभावावगाहि ज्ञानादनुमित्यापत्तिरूपश्चातिप्रसङ्गो बोध्यः ॥ ननु कदाचित् कस्यचित् पुरुषस्य संयोगाभावस्य प्रतियोगिसमानाधिकरणत्वेनज्ञायमानत्वे प्रतियोगिसमानाधिकरणत्वेनाज्ञायमाना यावन्तोऽभावास्तत्प्रतियोगितानवच्छेदकत्वस्य संयोगत्वेऽप्रसिद्धिसम्भवेऽतिप्रसङ्गाभिधानं कथं सङ्गच्छते चेन्न यत्किञ्चित्पुरुषीयत्वनिवेशेऽप्रसिद्ध्यसम्भवेन अतिप्रसङ्गकथनादिति ध्येयं ।

९। अथ हेतुसमानाधिकरणत्वेन ज्ञायमानत्वमिव प्रतियोगिव्यधिकरणत्वेन ज्ञायमानत्वनिवेशे तादृशव्याप्तिग्रहासंग्रहरूपदोषवारणं स्या त्तन्न मनोरमं हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्वज्ञानादनुमित्यनुपपत्तेरिति चिन्त्यं ॥ अथैवं यदा यस्य पुंसः संयोगाभावे प्रतियोगिसामानाधिकरण्यग्रहो न जातस्तस्य तदा प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं संयोगत्वमिति ज्ञानादनुमितेरपलापापत्तिः संयोगाभावस्य प्रतियोगिसमानाधिकरणत्वेन ज्ञायमानभिन्नहेतुसमानाधिकरणयावदभावान्तर्गतत्वेन प्रतियोगिसमानाधिकरणत्वेनाज्ञायमानहेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकं संयोगत्वमिति ज्ञानानुदयात् मैवं प्रतियोगिसमानाधिकरणत्वेनाज्ञायमाना इत्यस्य "साध्यतावच्छेदकं प्रतियोगिव्यधिकरण हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकमित्याकारकव्यभिचारधीविषयतान्तःपातिनी या हेतुसामानाधिकरण्यविषयतानिरूपिताभावविषयता तदनापन्ना ये प्रतियोगिसमानाधिकरणास्तदन्यत्वमेवार्थः" तथा च यदा तादृशसाध्याभावादौ प्रतियोगिसामानाधि-

त्वेति। तद्बुद्धीनामिति। तादृशावच्छेदकत्वाद्यभावबुद्धीनामि-
त्यर्थः। अत्र च प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगि-
तावच्छेदकत्वप्रकारिताव्यापकप्रकारित्वावच्छिन्नं प्रति विरोधि-
त्वमेव प्रवेश्यं (१०) तेन दैवात् घटवद्भूतलादिविषयकस्य तादृ-

---

करत्वज्ञानं नास्ति साध्यतावच्छेदके च निरुक्तव्यभिचारज्ञानमपि नास्ति तदा संयोगाभा-
वस्य निरुक्तविषयतानाक्रान्तप्रतियोगिसमानाधिकरणतया न विवक्षितप्रतियोगिसमानाधिक-
रणत्वेनाज्ञायमानयावदभावान्तर्गतत्वमिति तदा तादृशज्ञानादनुमित्युत्पत्तेः। अतो न का-
प्यनुपपत्तिरतोदोषान्तरमाह पुरुषकालाद्यननुगमादिति विभावनीयं।

१०। प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वग्रहनिरूपितप्रतिबध्यतानिरू-
पितप्रतिबन्धकतानिवेशे दैवात् घटवद्भूतलादिविषयकतादृशावच्छेदकत्वग्रहविरोधिघटाभाव-
वद्भूतलादिज्ञानादनुमित्यापत्तिरत एतादृशनिवेशः, नच प्रतियोगिव्यधिकरणहेतुसमानाधिकर-
णाभावप्रतियोगितावच्छेदकत्वप्रकारित्वावच्छिन्नं प्रति विरोधित्वनिवेशे तादृशसमूहालम्बन-
मादाय कथितानुमित्यापत्तिवारणसम्भवे तादृशप्रकारिताव्यापकत्वप्रवेशो व्यर्थ इतिवाच्यं तथा
सति व्यभिचारग्रहकालेऽपि प्रतियोगिव्यधिकरणहेतुसमानाधिकरणघटाभावप्रतियोगितानव-
च्छेदकं वह्नित्वमिति ज्ञानादेवं, महानसीयधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्व-
ज्ञानादपिच हेतुमत्पर्वतादिनिष्ठाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानादथवा ता-
दृशाभावीयघटनिष्ठप्रतियोगितानवच्छेदकवह्नित्वज्ञानादनुमित्यापत्तिवारणाय हेतुमत्त्वविष-
यितानिरूपिताधिकरणत्वविषयितानिरूपितवृत्तित्वमात्रविषयितानिरूपिता सती प्रतियोगिवै-
यधिकरण्यविषयितानिरूपिता या अभावमात्रविषयिता तन्निरूपितप्रतियोगित्वमात्रविषयिता-
निरूपितावच्छेदकत्वप्रकारित्वावच्छिन्नं प्रति प्रतिबन्धकत्वनिवेश आवश्यकस्तथाच मात्रपदस्येत-
रव्यावर्त्तकतया व्यापकत्वानिवेशापेक्षया महागौरवापत्तेः॥ ननु तथापि प्रतियोगिव्यधिकरण-
हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतात्वपर्य्याप्तावच्छेदकताकप्रकारित्वावच्छिन्न प्रतिबध्य-
तानिवेशेन तादृशघटाभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिज्ञानवारणसम्भवात्तादृश-
प्रकारिताव्यापकत्वनिवेशो व्यर्थः, नच हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वज्ञा-
नासंग्रहः इति वाच्यं, हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारितात्वेन प्रति-
योगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रकारितायास्तादृशज्ञान-
स्य प्रतिबध्यतावच्छेदकतया उक्तज्ञानस्य संग्रहसम्भवात्, अत्र केचित् प्रतियोगिव्यधिकरणहे-
तुमन्निष्ठाभावप्रतियोगितावच्छेदकवह्नित्वं घटवदिति ज्ञानीयधर्मितावच्छेदकत्वाख्यताद्-

शावच्छेदकत्वग्रहस्य विरोधिघटाभाववद्वृत्तित्वज्ञानमादाय नातिप्रसङ्गः, घटवद्वृत्तित्वविषयितायास्तादृशावच्छेदकत्वविषयित्वाव्यापकत्वात्। यत्तु, निरुक्तावच्छेदकत्वमात्रविषयिणीं यां काञ्चिदुक्तज्ञानव्यक्तिमादाय तद्व्यक्तिविरोधित्वेनैवानुगमान्नोक्तदोष इति। तन्न, तथासति प्रतियोगिवैयधिकरण्यादेः कारणतावच्छेदककोट्यप्रविष्टतया सत्यमित्यादिना वक्ष्यमाणस्यान्योन्याभावगर्भव्याप्तिज्ञानहेतुतालाघवस्यासङ्गतत्वापत्तेः। यद्यपि प्रतियोगितानवच्छेदकवह्नित्वाश्रयवान् धूमादित्यादौ प्रतियोगितानवच्छेदकवह्नित्वं प्रतियोगिव्यधिकरणधूमवन्निष्ठाभाव प्रतियोगितावच्छेदकमित्या-

---

शावच्छेदक तात्वपर्य्याप्तावच्छेदकताकप्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावत्तादृशावच्छेदकवह्नित्वं घटाभाववदिति ज्ञानात्, एवमेकत्र द्वयमितिरीत्या तादृशावच्छेदकताघटोभयावगाहिनि ज्ञाने तादृशोभयाभाववत्ताज्ञानस्य प्रतिबन्धकत्वेन तादृशोभयाभाववह्नित्वमिति ज्ञानादनुमित्यापत्तिवारणाय तादृशावच्छेदकतावद्वह्नित्ववद्वह्नित्वज्ञानप्रतिबन्धक तादृशावच्छेदकतावद्वह्नित्वाभाववद्वह्नित्वमितिज्ञानादनुमित्यापत्तिवारणाय च तादृशव्यापकतानिवेशः, यदि च धर्म्मितावच्छेदकतानात्मकत्वेन तादृशप्रकारिताया निवेशेन एवं तादृशावच्छेदकतात्वपर्य्याप्तावच्छेदकताकप्रकारत्वान्यप्रकारत्वानिरूपितमुख्यविशेष्यत्वावच्छिन्नप्रतिबध्यतानिवेशेन च न काप्यनुपपत्तिरित्युच्यते, तदा बहुतराभावप्रवेशेन तादृशप्रकारिताव्यापकतानिवेशापेक्षया लाघवानवकाश इति प्राहुः। नव्यास्तु, प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वपर्य्याप्तावच्छेदकताकत्वस्य प्रकारितायां निवेशे अवृत्तिगगनादिहेतुकस्थले गगनाधिकरणाप्रसिद्ध्या हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वपर्य्याप्तावच्छेदकताकत्वस्य प्रकारिताया असम्भवेन गगनादिहेतुकानुमित्यनुपपत्तिरतो हेतुतावच्छेदकपर्य्याप्तावच्छेदकताकविषयतानिरूपितइत्यादिक्रमेण प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्व घटकसकलपदार्थविषयतावच्छेदकतायाः पर्य्याप्तिर्निवेशनीया, तत्पर्य्याप्तावच्छेदकताकत्वन्तु जगदीशमते तन्निष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपितत्वं तथा च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावविषयतायां प्रतियोगिवैयधिकरण्यनिष्ठावच्छेदकताभिन्ना सती हेतुसमानाधिकरण्यनिष्ठावच्छेदकताभिन्ना च सती अभावत्वनिष्ठावच्छेदकताभिन्ना या अवच्छेदकता तदनिरूपितत्वमेव निवेशनीयं

कारकग्रहस्याहार्य्यस्यैव सम्भवात्तद्विरोधित्वाप्रसिद्ध्या तत्रानुगमोदुर्घटः। नच तादृशावच्छेदकत्वग्रहसमानविशेष्यकग्रहविरोधित्वं प्रवेश्यं, तथा च विशिष्टवह्नित्वधर्म्मिकाहार्य्यतादृशावच्छेदकत्वग्रहस्य विशेष्यं यद्वह्नित्वं तद्विशेष्यकस्यानाहार्य्यज्ञानस्य विरोधित्वप्रसिद्ध्या न दोष इति वाच्यं, तथा सति वह्नित्वं निरुक्त-

---

एवञ्च प्रत्येकपदार्थविषयतावच्छेदकतापर्य्याप्तिनिवेशे महागौरवमतस्तादृशप्रकारिताव्यापकतानिवेश इति समादधिरे ॥

ननु समानाकारकज्ञानीयप्रकारितायां ऐक्यमतेऽपि प्रकारिताया ज्ञानानात्मकतया निरूपकताभेदेन निरूपकतावच्छेदकभेदेन च भिन्नतया धूमत्वादिना पर्व्वतीयधूमावगाहिनि धूमत्वादिना महानसीयधूमावगाहिनि च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वावगाहिनि ज्ञाने जगदीशोक्ततादृशप्रकारितासत्त्वात् कापि प्रकारिता न तादृशप्रकारिताव्यापिका भवति ज्ञानभेदेन प्रकारिताभेदे तु सुतरामेव तथा, यत्किञ्चित्प्रकारिताव्यापकतानिवेशे महानसीयधूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानाद्भूतलं घटाभाववदिति ज्ञानाद्वानुमित्यापत्तिरिति चेन्न, प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकतावच्छेदकीभूतधर्म्मपर्य्याप्तावच्छेदकताकप्रकारितानिष्ठावच्छेदकताक प्रतिबध्यतानिरूपितप्रतिबन्धकताशालिग्रहत्वेनैव व्याप्तिधियोऽनुमितिहेतुत्वात्, ननु लौकिकसन्निकर्षजन्यस्य दोषविशेषजन्यस्य च ज्ञानस्य बाधनिश्चयाप्रतिबध्यतया साक्षात्कारत्वानिरूपितत्वस्य प्रतिबध्यतावच्छेदककुक्षाववश्यं निविष्टतया तादृशरूपपर्य्याप्तावच्छेदकताकप्रकारितानिष्ठावच्छेदकताकप्रतिबध्यत्वाप्रसिद्धिः प्रतिबध्यतावच्छेदकीभूतसाक्षात्कारत्वानिरूपिततादृशावच्छेदकताप्रकारितात्वस्य तादृशप्रकारिताव्यापकतानवच्छेदकत्वात्, अत्रोच्यते, साक्षात्कारत्वानिरूपिततादृशावच्छेदकत्वप्रकारिताव्यापकतावच्छेदकत्वस्य विवक्षणान्न दोष इति। केचित्तु यत्किञ्चिद्धर्म्मावच्छिन्नविशेष्यतानिरूपिततादृशावच्छेदकत्वप्रकारिताव्यापकत्वं प्रतिबध्यतायां निवेशनीयं व्यापकत्वञ्च स्वावच्छेदकीभूतप्रकारितावत्त्वसम्बन्धेन स्वं प्रतिबध्यत्वमेतल्लाभार्थमेव तादृशप्रकारिताव्यापकप्रकारित्वावच्छिन्नत्वं निवेशितमित्याहुः ॥

ननु वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्ध्या साध्यतावच्छेदकसम्बन्धेन प्रतियोगिमद्भिन्नहेत्वधिकरणवृत्त्यभावीयप्रतियोगितावच्छेदकताप्रकारिताव्यापकप्रकारित्वावच्छिन्नप्रतिबध्यता वक्तव्या प्रतियोगिता तु सम्बन्धविशेषेण न निवेश्या एवञ्चेत् हेतुसमानाधिकरणाभा-

प्रतियोगितानवच्छेदकमित्याकारकज्ञानवतोऽपि प्रतियोगितानवच्छेदकवह्नित्वप्रकारेणानुमित्यापत्तेः। तथापि प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वग्रहस्य प्रतिबन्धकतावच्छेदकीभूतप्रकारित्वावच्छिन्नसाध्यतावच्छेदकविशेष्यताकज्ञानत्वेनानुगमान्नदोषः। पटत्वादिधर्म्मिकतादृशावच्छेदकत्वग्रहं प्रति विरोधितावच्छेदकं यद्धूमवन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदत्वप्रकारित्वं तदादायैव प्रतियोगितानवच्छेदकवह्नित्वविशेष्यकव्यापकतावच्छेदकत्वज्ञानसौलभ्यात् ( ११ )

---

वीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वज्ञानासंग्रहः तज्ज्ञानस्य प्रतिबध्यतावच्छेदकप्रकारितायाः सम्बन्धविशेषानियन्त्रिततादृशप्रतियोगितावच्छेदकत्वप्रकारितायाः अव्यापकत्वान्मैवं, प्रतियोगितायाः साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयं वृत्त्यनियामकसम्बन्धेन साध्यकस्थले प्रतियोगिताया वृत्त्यनियामकसम्बन्धावच्छिन्नत्वाप्रसिद्धावपि प्रतियोगितायां तदवच्छिन्नत्वस्य परस्परोपश्लेषावगाहिज्ञाननिवेशान्नदोष इति ध्येयं।

ननु हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वलक्षणे हेत्वधिकरणवृत्तित्वं सिद्धान्तलक्षणोक्तरीत्या स्वप्रतियोगिमत्त्वाबुद्धेर्विरोधिताघटकसम्बन्धेनावश्यं वक्तव्यं तथासति तादृशसम्बन्धावच्छिन्नहेत्वधिकरणवृत्तितावदभावप्रतियोगितावच्छेदकत्वप्रकारितायाः प्रतियोगिव्यधिकरणहेत्वधिकरणनिरूपितसम्बन्धविशेषानियन्त्रितवृत्तितावदभावप्रतियोगितावच्छेदकत्वप्रकारितायाः अव्यापकत्वात् हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वज्ञानासंग्रहः, मैवं सिद्धान्तलक्षणोक्तरीत्या वस्तुतःव्याप्यवृत्तिसाध्यकस्थलएव प्रतियोगिवैयधिकरण्यं न देयं निरुक्त तादृशव्याप्यवृत्तिसाध्यकस्थले सम्बन्धविशेषानियन्त्रितमेव हेत्वधिकरणवृत्तित्वमितिध्येयं ॥

११। अथात्र साधनवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वप्रकारितानिरूपितानवच्छेदकवह्नित्वावच्छिन्नविशेष्यताशालिज्ञानीयतादृशप्रतियोगितानवच्छेदकत्वप्रकारितायाः पटत्वादिधर्म्मिकतादृशावच्छेदकत्वप्रकारिताशालिज्ञानप्रतिबन्धकतानवच्छेदकत्वेन तदादायैव प्रतियोगितानवच्छेदकवह्नित्वं तादृशप्रतियोगितानवच्छेदकमितिज्ञानसंग्रहकरणमनुचितमिति। चेन्न, समानविषयतासम्बन्धेन प्रतिबध्यप्रतिबन्धकभावमादृत्यैव तस्योक्तत्वात् तया च प्रतिबध्यप्रतिबन्धकभावस्य धर्म्मिविशेषानियन्त्रिततया सर्व्वासामेव तादृशानवच्छेदकत्वप्र-

इदन्तु चिन्त्यते । प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वग्रहविरोधि ज्ञानत्वेन धूमलिङ्गकवह्न्यनुमितौ न

---

कारितानां प्रतिबन्धकतावच्छेदकत्वात् न कश्चिद्दोष इति ध्येयं ॥ अत्र यत्किञ्चिद्धर्मावच्छिन्नविशेष्यकताद्दशाभावप्रतियोगितावच्छेदकत्वप्रकारिताव्यापकतावच्छेदकरूप पर्य्याप्तावच्छेदकताकप्रकारित्वनिष्ठावच्छेदकताकत्वं यदि प्रतिबध्यतायां निवेशनं ग्रन्थकृतोऽभिप्रेतं तदा जातित्वसामानाधिकरण्येन ताद्दशप्रतियोगितानवच्छेदकत्वज्ञानस्यासंग्रहः, जातित्वसामानाधिकरण्येन ताद्दशानवच्छेदकत्वनिश्चयप्रतिबध्यतावच्छेदककोटौ जातित्वव्यापकताद्दशावच्छेदकत्वप्रकारिताया एव निवेशनीयतया ताद्दशप्रकारितात्वस्य जातित्वसामानाधिकरण्येन ताद्दशावच्छेदकत्वप्रकारकग्रहसाधारणताद्दशप्रकारिताव्यापकतावच्छेदकत्वाभावात्, नच यत्किञ्चिद्धर्मव्यापकताद्दशप्रतियोगितावच्छेदकताप्रतियोगिकस्वरूपसम्बन्धेन ताद्दशावच्छेदकत्वप्रकारिताया व्यापकतावच्छेदकरूपपर्य्याप्तावच्छेदकताकत्वमेव प्रकारित्वनिष्ठावच्छेदकतायां निवेशनीयमितिवाच्यं, वह्नित्वत्वावच्छेदेन ताद्दशप्रतियोगितावच्छेदकत्वबुद्धौ वह्नित्वे अभावप्रतियोगितानवच्छेदकत्वनिश्चयस्य प्रतिबन्धकतया वह्नित्वविशेष्यकाभावप्रतियोगितानवच्छेदकत्वज्ञानादप्यनुमित्यापत्तेः, अथ वह्नित्वत्वावच्छेदेन अभावप्रतियोगितावच्छेदकत्वबुद्धिं प्रति एवं वह्नित्वत्वावच्छेदेन हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वबुद्धिं प्रत्यपि एकमेव वह्नित्वविशेष्यकाभावप्रतियोगितानवच्छेदकत्वनिश्चयस्य प्रतिबन्धकत्वं तथा च ताद्दशप्रकारिताशून्यज्ञानवृत्तिप्रकारितानवच्छिन्नत्वनिवेशादेव ताद्दशज्ञानान्नानुमित्यापत्तिरित्यपि न युक्तं व्यापकतावच्छेदकतदितरोभयानवच्छिन्नत्वस्य व्यापकशरीरे निविष्टतया व्यापकतावच्छेदकभेदात् वह्नित्वत्वावच्छेदेनाभावप्रतियोगितावच्छेदकत्वबुद्धिं प्रति वह्नित्वत्वावच्छेदेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वग्रहं प्रति च पृथक् पृथगेव प्रतिबन्धकत्वस्यावश्यं स्वीकारात् । अत्रोच्यते, स्वरूपसम्बन्धावच्छिन्नप्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिता—व्यापकतावच्छेदकरूपपर्य्याप्तावच्छेदकताकप्रकारित्वनिष्ठावच्छेदकतानिरूपितायच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितमुख्यविशेष्यितानिष्ठावच्छेदकतानिरूपिता या हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्ना प्रतिबध्यता तन्निरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारित्वावच्छिन्ना या प्रतिबन्धकता तन्निरूपिता या ताद्दशप्रतियोगितावच्छेदकत्वप्रकारित्वावच्छिन्नप्रतिबध्यता तन्निरूपितप्रतिबन्धकतावच्छेदकीभूतप्रकारित्वावच्छिन्नसाध्यतावच्छेदकविशेष्यिताकज्ञानत्वेनानुगमान्न कोपि दोषः । तथाहि वह्नित्वत्वसामाना-

धिकरणेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नं प्रति वह्नित्वत्वव्यापकताविशिष्टतादृशाभावप्रतियोगितावच्छेदकत्वाभावप्रतियोगिकस्वरूपसम्बन्धेन तादृशावच्छेदकतासामान्याभावप्रकारिताशालिनिश्चयत्वेनैकं प्रतिबन्धकत्वं, अपरञ्च वह्नित्वत्वावच्छेदेन तादृशप्रतियोगितावच्छेदकताप्रकारिताशालिबुद्धित्वावच्छिन्नं प्रति, वह्नित्वत्वावच्छेदेन तादृशप्रतियोगितानवच्छेदकतानिश्चय-वह्नित्वत्वसामानाधिकरण्येन तादृशप्रतियोगितानवच्छेदकत्वनिश्चयसाधारण वह्नित्वधर्म्मिक स्वरूपसम्बन्धावच्छिन्नतादृशावच्छेदकत्वाभावप्रकारिताशालिनिश्चयत्वेन, तत्र स्वरूपसम्बन्धावच्छिन्नतादृशाभावप्रतियोगितावच्छेदकताप्रकारिताव्यापकतावच्छेदकरूपपर्य्याप्तावच्छेदकताकप्रकारितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितमुख्यविशेष्यित्वनिष्ठावच्छेदकताकत्वं वह्नित्वत्वसामानाधिकरण्येन तादृशाभावप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतायामेव तन्निरूपितप्रतिबन्धकतावच्छेदकत्वञ्च वह्नित्वत्वव्यापकताविशिष्टतादृशावच्छेदकत्वाभावप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नतादृशावच्छेदकत्वाभावप्रकारितायामेव तदवच्छिन्ना च वह्नित्वत्वावच्छेदेन तादृशावच्छेदकता प्रकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपिता वह्नित्वत्वसामानाधिकरण्येन वह्नित्वत्वावच्छेदेन च तादृशावच्छेदकत्वाभावनिश्चयसाधारणप्रतिबन्धकतापि, तदवच्छेदकीभूता या वह्नित्वत्वसामानाधिकरण्येन तादृशावच्छेदकत्वाभावप्रकारिता तदवच्छिन्नसाध्यतावच्छेदकविशेष्यताकज्ञानत्वस्य वह्नित्वत्वसामानाधिकरण्येन तादृशावच्छेदकत्वाभावनिर्णयेऽपि सत्त्वान्न वह्नित्वत्वसामानाधिकरण्येन तादृशावच्छेदकत्वाभावनिश्चयादनुमित्यनुपपत्तिः। अभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञाननिष्ठप्रतिबन्धकतानिरूपिता या वह्नित्वत्वव्यापकतादृशावच्छेदकत्वप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नतादृशावच्छेदकताप्रकारकवह्नित्वविशेष्यकज्ञानत्वावच्छिन्नप्रतिबध्यता सा न स्वरूपसम्बन्धावच्छिन्नतादृशाभावप्रतियोगितावचच्छेदकताप्रकारिताव्यापकतावच्छेदकरूपपर्य्याप्तावच्छेदकताकप्रकारित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितमुख्यविशेष्यतानिष्ठावच्छेदकताका, किन्तु वह्नित्वत्वसामानाधिकरण्येनाभावप्रतियोगितावच्छेदकत्वप्रकारकबुद्धित्वावच्छिन्नैव तस्मान्न न तादृशहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकताप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वमिति अभावप्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानासंग्रह एवं रीत्या जातित्वसामानाधिकरण्येन तादृशज्ञानसंग्रह इति सुधीभिर्भाव्यं।

व्याप्तिज्ञानं हेतुर्मानाभावात् वह्निज्ञानत्वादिनैव हेतुत्वसम्भवात् (१२) नचोक्तावच्छेदकत्वग्रहविरोधिधूमवत्पर्व्वतनिश्चयत्वेनाननुगतरूपेण प्रतियोगिवैयधिकरण्यादिविषयकपरामर्शोऽनुमितिहेतुः धूमव्यापकोवह्निर्धूमवांश्च पर्व्वतइत्यादिसमूहालम्बनादपि पर्व्वतो-वह्निमानित्यनुमित्यापत्तेः। किञ्च प्रतियोगिव्यधिकरणत्वमत्र स्वस्वप्रतियोगिव्यधिकरणत्वमवश्यं वाच्यं, तथा च स्वत्वस्यैकस्याभावात् एकं स्वमादाय प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वग्रहविरोधित्वेनानुगमे तादृशाभावान्तरप्रतियोगितावच्छेदकत्वग्रहदशायामनुमित्यापत्तिः। किञ्च, उक्तग्रहविरोधितावच्छेदकीभूतप्रकारितावन्निश्चयत्वेनैव तत्र हेतुत्वं वाच्यं तथा च तन्निश्चयत्वस्य तत्तत्प्रकारादिगर्भतयाऽननुगमोदुर्व्वार इति दिक् (१३) हेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकत्व बुद्धावुक्तग्रहविरोधित्वं सङ्गमयति विरुणद्धीति। सामान्यघटितेति। तेन द्रव्यसामान्याभावग्रहेऽपि घटवत्त्वादिग्रहोत्पत्त्या न क्षतिः।

---

१२। अनुमितौ परामर्शत्वेन व्यापारविधया कारणत्वस्वीकारेण व्यभिचारादिग्रहकालेऽनुमित्यसम्भवेन कृतकृत्यता, किं पुनः गुरुतरतादृशविरोधिज्ञानत्वेन, लघुरूपवह्निज्ञानत्वेन जनकतास्वीकारे सर्व्वं सामञ्जस्यमिति भावः। नन्वेवं ज्ञानत्वेन हेतुत्वसम्भवादित्युक्त एव सम्यक्तो वह्निपदमनर्थकं, सत्यं, व्यापारं प्रति येन रूपेण कारणता कार्य्यं प्रत्यपि तेन रूपेणैव यदि नियमः स्यात् विशिष्टबुद्ध्यात्मकपरामर्शं प्रति विशेषणज्ञानविधया वह्निज्ञानत्वेनैव हेतुत्वात् तन्नियमरक्षार्थं वह्निपदमिति, आदिना अभावज्ञानत्वादेः परिग्रहः।

१३। स्मरणात्मकविशिष्टपरामर्शं प्रति तादृशविरोधिज्ञानत्वेन हेतुत्वात् अनुमितिं प्रत्यपि तद्रूपेण हेतुत्वं वक्तव्यमित्याशयेन प्रथमं दोषं परिहाय नचोक्तेत्यादिना द्वितीयदोषाभिधानं, तादृशसमूहालम्बनाद्यदि अनुमितेरिष्टापत्तिः क्रियते अथवा तादृशावच्छेदकत्वग्रहविरोधिधूमवत्पर्व्वतनिश्चयीयविषयितानां परस्परनिरूप्यनिरूपकभावापन्नानां कारणतावच्छेदकत्वेन गृह्यते तदा समूहालम्बनमादाय न दोष इत्यतोदोषान्तरमाह किञ्चेति, यदि स्वत्वस्यानुगतत्वमतमाश्रियते तदा नायं दोषः अतश्चरमदोषाभिधानं।

घटोनास्तीति। भूतलइत्यादिः। पृच्छति तत्कस्य हेतोरिति (१४) उत्तरयति तद्विशिष्टेति। घटत्वविशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रत्येव घटत्वावच्छिन्नाभावनिश्चयत्वेन प्रतिबन्धकत्वं घटवदित्याकारकबुद्धिवच्च नीलघटवदित्याकारकबुद्धिर्घटत्वविशिष्टवैशिष्ट्यावगाहिनीतिभावः। अतएवोक्तक्रमेण विरोधित्वानुगमादेव। अन्यथाऽवच्छेदकभेदमात्रप्रवेशे ऽवच्छेदकत्वात्यन्ताभावबुद्ध्यसंग्रहापत्तिरितिभावः। ननु प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वग्रहविरोधित्वं तादृशावच्छेदकत्वाभावव्याप्यवत्त्वग्रहस्यापि तथा तादृशावच्छेदकत्वव्यावर्तकधर्म्मदर्शनस्यापि एवमभावादौ हेतुसामानाधिकरण्याभावादिग्रहस्यापि, इति ततोऽप्यनुमित्यापत्तिरित्यत आह हेत्वाभासेचेति। तथा च यथा व्याप्तिग्रहविरोधित्वादिरूपेण सव्यभिचारित्वादिलक्षणे विरोधित्वं साध्याप्रसिद्ध्यादावतिव्याप्तिवारणार्थं साध्यतावच्छेदकादिमात्रग्रहविरोधित्वान्यत्वेन विशिष्यते तथाऽत्रापि तादृशावच्छेदकत्वग्रहविरोधित्वं तादृशावच्छेदकत्वाभावव्याप्यवत्त्वाद्यवच्छिन्नविरोधिताभिन्नत्वेन विशेषणीयमिति भावः। अनवच्छेदकत्वादीत्यादिपदेन प्रतियोगितानवच्छेदकत्वादेः संग्रहः। केवलान्वयित्वग्रहस्यानुमितिहेतुताङ्गीकुर्व्वतामत्रानुमितिरेवेत्यावेदयितुं यदिचेत्युक्तं। तादृशावच्छेदकत्वग्रहाविरोधित्वेनेति। तथाविधावच्छेदकत्वग्रहविरोधित्वान्यत्वेनेत्यर्थः। विशेषणीयमिति। निरुक्तविरोधित्वमितिशेषः। तेन प्रतियोगितानवच्छेदकं प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकञ्च वह्नित्वमिति स-

---

१४। तत्सामान्याभावनिश्चयस्य सामान्यघटितविशेषवत्ताबुद्धिविरोधित्वं कस्य हेतोः प्रयोज्यमित्यर्थस्तथाचैतादृशविरोधितायां कारणाभावादयुक्तमितिभावः।

मूहालम्बनज्ञानस्य नानुपसंग्रहः। (नचैवमप्यभावोन हेतुसमानाधिकरणइत्यादिज्ञानेऽतिप्रसङ्गः अभावादौ हेतुसामानाधिकरण्यग्रहाविरोधित्वेनापि विशेषणीयत्वात्,) वस्तुतो हेतुमन्निष्ठाभाव प्रतियोगितावच्छेदकत्वप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वेनैव प्रतिवध्यत्वं विशेष्यं, तावतैव प्रतियोगितानवच्छेदकं वह्नित्वमित्यादिबुद्धेरपि व्युदासात् (१५) इति ध्येयं। विशि-

---

१५। ननु तादृशप्रकारिताशून्यज्ञानावृत्तिप्रतिवध्यतानिवेशेनैवानवच्छेदकं वह्नित्वमित्यादिज्ञानवारणसम्भवे प्रतिवध्यतायांतादृशप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वपर्य्यन्तनिवेशोव्यर्थः चेन्न, स्वरूपसम्बन्धात्मिकायाः प्रतिवध्यताया ज्ञानभेदेन भिन्नत्वे हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं वह्नित्वमिति ज्ञानवृत्ति यत् प्रतिवध्यत्वं तस्य तादृशज्ञानावृत्तितया तन्निरूपितप्रतिवन्धकतावत्प्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानादनुमित्यापत्तेरिति॥ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वप्रकारिताभिन्नप्रकारित्वानवच्छिन्नत्वनिवेशेनोपपत्तौ किं ज्ञानवृत्तित्वकथनेन तन्न, व्यभिचारज्ञाननिष्ठप्रतिवध्यताया विनिगमकाभावेन तादृशावच्छेदकत्वप्रकारित्वेनेव तदन्येन निरूप्यनिरूपकभावापन्नहेतुप्रकारित्वादिनाप्यवच्छेद्यत्वात् तादृशप्रतिवध्यत्वाप्रसिद्धेः॥ ज्ञानपदन्तु स्वरूपसम्बन्धेन प्रकारितायां वृत्तित्वलाभाय अन्यथा तादृशप्रकारिताशून्यघटादिज्ञाननिरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्वस्य व्याप्तिज्ञानप्रतिवध्यतायां सत्त्वात् तादृशप्रतिवध्यत्वाप्रसिद्धिरिति ध्येयं॥ ननु तादृशप्रकारिताशून्यज्ञानवृत्तिप्रतिवध्यत्वानिरूपितप्रतिवन्धकतानिवेशेप्युक्तदोषवारणं सम्भवति किं तादृशप्रकारित्वानवच्छिन्नत्वादिनिवेशेन तन्न, वह्नित्वधर्म्मिकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाभावप्रकारकनिश्चयत्वेन वह्नित्ववृत्तित्वप्रकारकतादृशावच्छेदकत्वविशेष्यकज्ञानं प्रति वह्नित्वविशेष्यकतादृशावच्छेदकत्वप्रकारकज्ञानं प्रतिच प्रतिवन्धकत्वस्यैक्येन तादृशप्रकारिताशून्यतादृशावच्छेदकत्वं वह्नित्ववृत्तीत्याकारकज्ञानवृत्ति यत् प्रतिवध्यत्वं तन्निरूपितत्वस्य व्यभिचारज्ञानप्रतिवन्धकतायां सत्त्वादसम्भवापत्तेरिति, अस्मन्मते तु तादृशप्रकारिताशून्यज्ञानवृत्त्यवच्छेदकतानात्मकमुख्यप्रकारित्वानवच्छिन्नत्वनिवेशान्न काचित् क्षतिः॥ तादृशप्रकारितामपहाय तादृशविषयिताशून्यज्ञानवृत्तिप्रतिवध्यत्वानिरूपितत्वनिवेशनं न सम्भवति हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदकतास्थले अभावप्रतियोगितानवच्छेदकं साध्यतावच्छेदकमिति ज्ञानेऽतिव्याप्त्यापत्तेरिति ध्येयं॥ अथ व्यभिचारज्ञानीयप्रतिवध्यतानामेव हेतुमन्निष्ठघटाद्यभाव-

चणस्य प्रतियोग्यसमानाधिकरणत्वरूपस्य दानमित्यर्थः। प्रति-

---

प्रतियोगितावच्छेदकताप्रकारिताशून्यव्यभिचारज्ञानवृत्तिप्रकारित्वावच्छिन्नत्वे नासम्भवमिया तत्तद्विषयतानिष्ठताद्दशाभावप्रतियोगितावच्छेदकतायाः पर्य्याप्तिरवश्यं निवेशनीया, तदनिवेश्य हेतुविषयतानिष्ठावच्छेदकतानिरूपितेत्यादिक्रमेण प्रकारितानिष्ठा या अवच्छेदकता तन्निरूपितप्रतिबध्यतानिवेशेनैवाभावप्रतियोगितानवच्छेदकं वह्नित्वमित्यादिज्ञानवारणसम्भवे कथमेतावान् प्रयासः। मैवं, वह्निमान् अवच्छेदकत्वाभाववदभाववत्कालीनधूमादित्यादौ ताद्दशहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वप्रकारकवह्नित्वविशेष्यकज्ञानं प्रति अवच्छेदकताप्रकारकवह्नित्वविशेष्यकज्ञानं प्रति च, अभावावच्छेदेन अवच्छेदकत्वाभावप्रकारकनिश्चयविशिष्ट-अभाववद्वह्नित्वमिति निश्चयत्वेन एकं प्रतिबन्धकत्वं यद्रूपावच्छिन्नप्रकारकत्वेन प्रतिबध्यकत्वं तद्रूपावच्छिन्नाभावघटितप्रामाण्यज्ञानस्यानुगतरूपेण उत्तेजकत्वानुरोधेन ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकत्वान्तरमपि स्वीकार्य्यं, अतएव प्रतिबन्धकतायानानात्वं हेत्वाभासे उक्तं प्रतिबध्यताया नानात्वे मानाभावादिवचेत् कथितप्रकारिताशून्यं यदवच्छेदकतावद्वह्नित्वमिति ज्ञानं तत्रापि अवच्छेदकत्वाभाववदभाववत्कालीनधूमवन्निष्ठाभावप्रतियोगितानवच्छेदकवह्नित्वमिति निश्चयप्रतिबध्यतासत्त्वेन ताद्दशप्रतिबध्यताप्रसिद्धा ताद्दशव्याप्तिज्ञानासंग्रहवारणाय प्रतिबध्यतायां ताद्दशप्रकारिताशून्यज्ञानवृत्तिप्रकारित्वानवच्छिन्नत्वमनिवेश्य प्रतिबन्धकतायामेव तदनवच्छिन्नत्वं निवेशनीयं, तथा च ज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतामादाय ताद्दशव्याप्तिज्ञानसंग्रहः, एवञ्च हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वप्रकारकबुद्धिं प्रति हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकत्वसांसर्गिकविषयितानिरूपिताभावत्वावच्छिन्नप्रकारकनिश्चयत्वेनैव प्रतिबन्धकतया ताद्दशप्रतिबन्धकतायां हेतुविषयतानिष्ठावच्छेदतानिरूपिताधिकरणविषयतानिष्ठावच्छेदकता इत्यादिक्रमापन्नावच्छेदकतानिरूपितत्वाभावेनासम्भवभिया तत्परित्यक्तत्वादिति ध्येयं॥

अथ धूमवन्निष्ठाभावप्रतियोगितानवच्छेदकतावद्घटत्वकालीनवह्नित्वाश्रयवान् धूमादित्यादौ अभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकमित्यादिज्ञानादनुमित्यापत्तिस्तज्ज्ञानीयप्रतिबध्यतायां ताद्दशप्रकारित्वानवच्छिन्नत्वात्, चेन्न, अवच्छेदकतानात्मकताद्दशप्रकारिताशून्यत्वस्य ज्ञाने विवक्षणात्तदापत्त्ययोगात्, अत्र ताद्दशज्ञानवृत्तिप्रकारितायामपि अवच्छेदकतानात्मकत्वं देयं, तेन व्यभिचारज्ञानीयप्रतिबध्यतामात्रस्यैवावच्छेदकतानात्मकताद्दशप्रकारिताशून्यताद्दशावच्छेदकतावद्वह्नित्वं घटवदित्याकारकज्ञानवृत्तिप्रकारितावच्छिन्नत्वेऽपि न क्षतिरिति ध्येयं॥ वयन्तु, प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकताप्रकारिताव्यापकीभूत—प्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिब-

न्धकतावच्छेदकीभूततादृशप्रकारितावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभू-
तविषयतासामान्यं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतासामान्याभावव्याप्यव-
त्तानिश्चयप्रतिबध्यतावच्छेदकं तादृशविषयत्वावच्छिन्नसाध्यतावच्छेदकविषयताकव्याप्ति-
ज्ञानं हेतुः । एवञ्च प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदक-
ताप्रकारिताव्यापकीभूतप्रकारित्वावच्छिन्नप्रतिबध्यतानिरूपिता या साध्यतावच्छेदकधर्म्मिक-
हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावनिश्चयत्वावच्छिन्नप्रतिबन्धकता या वा
साध्यतावच्छेदकधर्म्मिकाभावप्रतियोगितावच्छेदकत्वाभावप्रकारकनिश्चयत्वावच्छिन्नप्रतिब-
न्धकता या च अभावधर्म्मिकहेतुसामानाधिकरण्याभावप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धक-
ता तस्याः प्रत्येकनिरूपितप्रतिबध्यतावच्छेदकीभूतविषयतासामान्यान्तर्गतानां अभावो हेतुस-
मानाधिकरणः अभावप्रतियोगितावच्छेदकं वह्नित्वमिति ज्ञानीयविषयतानां हेतुसमानाधि-
करणाभावप्रतियोगितावच्छेदकत्वसामान्याभावव्याप्यवत्तानिश्चयप्रतिबध्यतानवच्छेदकत्वात्
तादृशप्रतिबन्धकतामादायाभावो न हेतुसमानाधिकरणः अभावप्रतियोगितानवच्छेदकं वह्नि-
त्वमिति ज्ञानयोर्न संग्रहः, वह्निमान् प्रतियोगितावच्छेदकत्वाभाववदभाववत्कालीनधूमादित्यादौ
वह्नित्वधर्म्मिकाभावप्रतियोगितावच्छेदकत्ववत्ताबुद्धिं प्रति या अभावावच्छेदेन प्रतियोगिता
वच्छेदकत्वाभावप्रकारकनिश्चयविशिष्टवह्नित्वधर्म्मिकाभावप्रकारकनिश्चयत्वावच्छिन्नप्रतिबन्धक-
ता तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूतविषयतासामान्यान्तर्गतप्रतियोगिता-
वच्छेदकं वह्नित्वमितिज्ञानीयविषयतानां प्रागुक्तज्ञानवैशिष्ट्यावच्छिन्नप्रतिबन्धकतानिरूपितप्र-
तिबध्यतावच्छेदकत्वेऽपि तादृशावच्छेदकत्वाभावव्याप्यवत्तानिश्चयप्रतिबध्यतानवच्छेदक-
त्वात् तादृशप्रतिबन्धकतामादाय अभाववद्वह्नित्वमितिज्ञानान्नानुमित्यापत्तिः । ननु वह्नित्वध-
र्म्मिकप्रतियोगितावच्छेदकताप्रकारकबुद्धिं प्रत्यभावावच्छेदेन प्रतियोगितावच्छेदकत्वा-
भावप्रकारकनिश्चयविशिष्टवह्नित्वधर्म्मिकाभावप्रकारकनिश्चयत्वेनैव प्रतियोगितावच्छेदकत्वा-
भाववदभाववत्कालीनधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्ववति तादृशावच्छेद-
कत्वाभावप्रकारकमित्यप्रमान्यज्ञानाभावविशिष्टवह्नित्वधर्म्मिकतादृशावच्छेदकत्वाभावप्रकार-
कनिश्चयत्वेनापि प्रतिबन्धकत्वान्तरमस्तु अप्रामान्यज्ञानस्योत्तेजकत्वानुरोधेन प्रकारतावच्छेद-
कभेदेन प्रतिबन्धकताभेदस्य जगदीशसम्मतत्वात्, अतएव घटसामान्याभाववत्ताबुद्धिं प्रति अप्रा-
मान्यज्ञानस्योत्तेजकत्वानुरोधेन घटप्रकारकनिश्चयत्वेनैव नीलघटप्रकारकनिश्चयत्वेनापि प्रति-
बन्धकत्वान्तरं स्वीकृत्य घटसामान्याभावसाध्ये नीलघटवत्तादिकं बाधइति तैरुक्तं हेत्वाभासे,
एवञ्चेन्निरुक्तप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूतविषयतासामान्यान्तर्गतप्रतियोगिता-
वच्छेदकं वह्नित्वमिति ज्ञानीयविषयतानां निरुक्तहेतुसमानाधिकरणाभावीयप्रतियोगिताव-
च्छेदकत्वाभावव्याप्यवत्तानिश्चयप्रतिबध्यतानवच्छेदकत्वात् तत्प्रतिबन्धकतामादाय तादृश-

योग्यवृत्तित्वस्यैव (१६) इत्येवकारेण प्रतियोग्यधिकरणावृत्तित्वस्य गुरोर्व्यवच्छेदः । ननु यत्समानाधिकरणात्यन्ताभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये साध्यसमानाधिकरणात्यन्ताभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितानवच्छेदकधर्म्मावच्छेद्यत्वं नास्ति तत्त्वमित्यत्यन्ताभावगर्भव्याप्तौ निष्कृष्टायां प्रतियोगिवैयधिकरण्याप्रवेशान्नैषदोष इत्यत आह नवेति । तथा च यत्समानाधिकरणान्योन्याभावीयप्रतियोगितासामान्ये साध्यवन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकधर्म्मावच्छेद्यत्वं नास्ति तत्त्वमित्यन्योन्याभावगर्भव्याप्तौ प्रतियोगितांशे सम्बन्धविशेषा-

---

प्रतियोगितानवच्छेदकं वह्नित्वमिति ज्ञानस्यापि न संग्रहः इत्युच्यते, निरुक्तायप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूता सती तत्प्रतिबन्धकतावच्छेदकविषयत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयतासामान्यं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभाववत्तानिश्चयप्रतिबध्यतावच्छेदकं तादृशप्रतिबन्धकतामादायानुगमान्न दोषस्तथाहि वह्नित्वधर्म्मिकप्रतियोगितावच्छेदकत्वाभाववदभाववत्कालीनधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावनिश्चयत्वावच्छिन्ना या प्रतिबन्धकता तत्प्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वस्य प्रतियोगितावच्छेदकं वह्नित्वमिति ज्ञानीयविषयतायां सत्त्वेपि तत्प्रतिबन्धकतावच्छेदकीभूतविषयत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वस्य तत्र विरहात्तादृशविषयतासामान्यान्तर्गतत्वं केवलं प्रतियोगितावच्छेदकत्वविषयतायां नास्ति किन्तु प्रतियोगिव्यधिकरणनिरुक्तहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं वह्नित्वमिति ज्ञानीयविषयतायामेव तत्र तादृशावच्छेदकत्वाभावनिश्चयप्रतिबध्यतावच्छेदकत्वात्प्रतिबन्धकतामादाय निरुक्तज्ञानस्य संग्रह इति युक्तमुत्पश्यामः ॥ अत्र केचित्, प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकीभूतविषयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदिका सती या निरुक्तप्रतिबन्धकतावच्छेदकविषयता तदवच्छिन्नसाध्यतावच्छेदकविशेष्यताकज्ञानत्वेनानुगमान्न कोऽपि दोषः पदमादधाति इत्याहुस्तच्चिन्त्यं ॥

१६ । हेतुमन्निष्ठान्योन्याभावत्व विशिष्टाभाव प्रतियोगिता एतल्लक्षणघटकीभूतप्रतियोगितान्तार्थः अन्योन्याभावत्ववैशिष्ट्यतु स्वाश्रयत्व-स्वनिरूपितप्रतियोगिताश्रयावृत्तित्वोभयसम्बन्धेन

प्रवेशाल्लाघवमुक्तायामत्यन्ताभावगर्भायान्तु विशिषणताविशेषावच्छिन्नत्वेन प्रतियोगितायानिवेशाद्गौरवमित्यन्योन्याभावगर्भाया हेतुत्वे विनिगमकमिति भावः। अन्योन्याभावत्वमपि यदि तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं न त्वखण्डोपाधिस्तदा तद्घटितव्याप्तावपि सम्बन्धविशेषनिवेशाल्लाघवस्यानवकाशः, वस्तुतोऽत्यन्तान्योन्याभावघटितयोर्द्वयोरपि व्याप्त्योर्नानुपयोगित्वमिति लघोः साध्यवदन्यावृत्तित्वस्यैवाग्रे तथात्वस्य वक्ष्यमाणत्वात् (१७) इत्याशयेन यथाश्रुतेत्युक्तं। अपरे। मूलग्रन्थाननुरोधिन इत्यर्थः। इन्द्रियेति। तथा च द्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति चक्षुःसंयोगादेर्व्यभिचारेऽपि द्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येव यथा चक्षुःसंयोगत्वादिना हेतुत्वं तथानुमितित्वावच्छिन्नं प्रत्यत्यन्ताभावान्योन्याभावगर्भव्याप्यवत्तापरामर्शस्य हेतुतायां व्यभिचारसत्त्वेऽप्यत्यन्ताभावगर्भव्याप्यवत्तापरामर्शनाशकानुमितित्वावच्छिन्नं प्रत्येवात्यन्ताभावगर्भव्याप्तिज्ञानत्वादिनाहेतुत्वं वाच्यमिति भावः। तद्रूपेति। तथा च साध्यतावच्छेदकं साध्यञ्च साध्यवत्ताग्रहविरोध्यभावग्रह (१८) विषयतावच्छेदकत्वेनानुगमय्य हेतुधर्मि-

---

तेन धर्म्मिभेद-धर्म्मात्यन्ताभावयोरैक्येऽपि न क्षतिरिति ध्येयं।

१७। हेतुनिष्ठं यत् साध्यवद्वृत्तित्वं तदन्यवृत्तित्वाभावो व्याप्तिरिति लक्षणार्थस्तेन वाच्यं ज्ञेयत्वादित्यादौ ज्ञेयत्वादिनिष्ठं यत् साध्यवद्वृत्तित्वं तदन्यवृत्तित्वं आकाशाभावादौ प्रसिद्धं तदभावस्य ज्ञेयत्वादौ सत्त्वाल्लक्षणसमन्वयः। नच तथापि वाच्यं प्रमेयादित्यादौ साध्यवन्निरूपितप्रमेयनिष्ठवृत्तिभिन्नवृत्त्यप्रसिद्ध्याऽव्याप्तिर्दुर्व्वारैवेति वाच्यं, स्वनिष्ठं यत् साध्यवद्वृत्तित्वं तद्भेदनिवेशेन सामञ्जस्यात् यदा यत्र हेतौ लक्षणं सङ्गमनीयं तदा स्वपदेन तस्यैवोपादेयतया तत्तत्प्रमेयव्यक्तौ साध्यवन्निरूपित तत्तद्वृत्तिभिन्नप्रमेयान्तरनिष्ठवृत्तिशून्यत्वमादाय लक्षणसमन्वयात्। अधिकन्तु केवलान्वयिग्रन्थेऽनुसन्धेयमिति।

१८। विषयतापदेन प्रतियोगितासम्बन्धावच्छिन्नविषयता बोध्या इति॥

कतदवच्छिन्नाभावसामानाधिकरण्यग्रहविरोधित्वेनैव व्याप्तिधियोऽनुमितिहेतुत्वमिति भावः। तद्ग्रहस्य। साध्यतद्वतोरत्यन्तान्योन्याभावग्रहस्य। कथञ्चित्। अभावान्तरे प्रतियोगितासम्बन्धेन वाच्यत्वाद्यवगाहित्वेन। अत्र साध्यभेदस्य साध्यवदत्यन्ताभावस्य च साध्यवत्ताग्रहविरोधितावच्छेदकरूपावच्छिन्नाभावत्वासत्सामानाधिकरण्यग्रहविरोधिनि साध्यभेदासामानाधिकरण्यस्य साध्यवदत्यन्ताभावासामानाधिकरण्यस्य वा ग्रहेऽप्यनुमित्यापत्तिः किञ्च भिन्नविषयकग्रहस्य विरोधित्वे साध्यवद्भेदान्तर्भाविनानुगमोऽव्यर्थः। साध्यात्यन्ताभावसामानाधिकरण्यग्रहविरोधित्वेनैवान्योन्याभावगर्भव्याप्तिज्ञानस्यानुगमसम्भवादविरोधित्वे तु साध्यवद्भेदग्रहस्य साध्यवत्ताग्रहाविरोधित्वादुक्तक्रमेणानुगमाशक्यत्वमित्यस्वरसेनाह तच्चिन्त्यमिति। मतान्तरमाह साध्यतावच्छेदकेत्यादि वदन्तीत्यन्तेन, नव्यमते, अत्यन्तान्योन्याभावगर्भव्यापकताज्ञानयोरन्योन्यात्यन्ताभावगर्भव्यापकत्वग्रहे प्रत्यविरोधित्वादुभयसंग्रहार्थमवगाहिताद्वयोक्तिः। ननु साध्यतावच्छेदके तादृशावच्छेदकत्वावगाही साध्यतावच्छेदकावच्छिन्नसाध्यवत्त्वे च तादृशान्योन्याभावप्रतियोगितावच्छेदकत्वागाही यो ग्रहस्तद्विरोधित्वेनानुगमे गौरवमत आह साध्याभावेति। तथाचात्र कल्पे साधनस्यैव विशेष्यतया निवेशो नतु साध्यतावच्छेदक--तदवच्छिन्नसाध्ययोर्विशेष्यतया निवेश इति लाघवमिति भावः। केचित्तु, साध्यव्यापकताज्ञानं नानुमितिहेतुः साधनभेदेन नानात्वात् (१९) किन्तु साध्याभाववदवृत्तित्वस्य साध्यवदन्याट्ट-

---

१९। ननु साध्यव्यापकहेतुज्ञानस्य जनकत्वमतेऽपि हेतुमनन्तर्भाव्य स्वावच्छिन्नव्यापकसाध्यसामानाधिकरण्यावच्छिन्नत्व-स्वावच्छिन्नत्वोभयसम्बन्धेन सामान्यतो धर्मविशिष्टत्वेन धूमा-

त्तित्वस्य च द्वयोरेव ज्ञानं हेतुः साधनभेदेऽप्यभेदात् (२०) तद्-भ्रमादेव च केवलान्वय्यनुमितिरिति नव्यमतमनुस्मृत्याह साध्या-भावेति, साधनधर्म्मिकेत्यादिः। अत्राप्युभयप्रवेशफलं पूर्ववत्। विरोधित्वादिकमित्यादिना तत्तद्व्याप्त्यभावकूटावगाहिग्रहविरोधित्वा-देः परिग्रहः। ननु जातिमान् द्रव्यत्वादित्यादौ हेतुतावच्छेदक-समवायादिसम्बन्धेन साध्याभाववद्वृत्तित्वाप्रसिद्ध्या तदवगाहिग्रह-विरोधित्वं दुर्व्वचमतआह प्रसिद्धिरिति। तथाच समवेतत्वे सा-ध्याभाववदीयत्वावगाहीभ्रमरूप एव ग्रहोधर्त्तव्य इति भावः। ननु व्यभिचारव्यावर्त्तकधर्म्मवत्त्वज्ञानस्यापि व्यभिचारग्रहविरो-धित्वात्तत्रातिप्रसङ्ग (२१) इत्यत आह अधिकमिति। तादृ-शज्ञानव्यावृत्तोविरोधिताविशेष एव निवेशनीयइति भावः। ननूक्तक्रमेणात्यन्ताभावगर्भव्याप्तेरनुमितिहेतुत्वे अन्योन्याभावग-र्भव्याप्तिरित्यादिमूलग्रन्थासङ्गतिरित्यत आह ग्रन्थस्त्विति। अ-न्योन्याभावगर्भपदस्यानौपाधिकत्वान्यपरत्वादितिभावः। अनौ-

---

लौकादिनिष्ठप्रकारतानामनुगमे साधनभेदेन नानात्वादिति ग्रन्थासङ्गतिश्चेन्न, जातिविशेषत्वादि-ना धूमत्वाद्यवगाहिनी जातिविशेषवद्व्यापकवह्निसमानाधिकरणधूमवानित्यादिज्ञानादनुमित्या-पत्तिभिया तादृशानुगमानादरात्।

२०। अथ हेतुमनिवेश्य साध्याभाववदवृत्तित्वप्रकारकज्ञानत्वेन हेतुत्वे व्यभिचारज्ञानका-लेऽपि निर्धर्म्मितावच्छेदकव्याप्तिज्ञानोत्पत्त्याऽनुमित्युत्पत्तेरावश्यकतया व्यभिचारस्य हेतुदोष-तानुपपत्तिरिति चेन्न, पक्षवृत्तित्वेन धूमे निश्चीयमाने धूमत्वाद्यवच्छेदेन व्याप्तिनिश्चयं विना पक्षवृत्तित्वावच्छेदेन व्यभिचारसंशयस्यानिवृत्तेः पक्षे अव्यभिचारिसामान्याभावकोटिकसंशय-स्य सम्भवात् निर्धर्म्मितावच्छेदककस्यापि पक्षे व्याप्तिनिश्चयस्यासम्भवेन धूमे व्यभिचारग्रहस्या-नुमित्युत्पत्तिविरोधित्वात् इति अन्यत्सर्व्वं सुधीभिर्भाव्यं।

२१। व्यभिचाराभाववत्तद्वृत्तित्ववत्कालीनतद्वृत्तित्ववद्धेतुरिति निश्चयादनुमित्यापत्तिःस्यादि-तिभावः।

पाधिकत्वमात्रव्यवच्छेदे मूलस्वरसं दर्शयति यदित्यादि। अन्यथाऽनौपाधिकत्वादिकन्तु तल्लक्षणमित्येवं ब्रुयादितिभावः। अत्रोक्तग्रहविरोधित्वमात्रेण हेतुत्वेऽनौपाधिकत्वज्ञानस्यापि कारणत्वापत्तिस्तस्यापि सोपाधिकत्वमन्तर्भाव्य यो व्यभिचारग्रहस्तद्विरोधित्वेनोक्तरूपत्वात् न च तादृशग्रहत्वाव्यापकविषयताशून्यग्रहविरोधिज्ञानत्वेनैवहेतुत्वं सोपाधित्वविषयिता तु तादृशग्रहत्वाव्यापिकैवेति नातिप्रसङ्ग इतिवाच्यं। ज्ञानभेदेन विभिन्नानां सर्व्वासामेव विषयितानां तादृशग्रहत्वाव्यापकत्वेन तत्शून्यग्रहाप्रसिद्धेः उक्तक्रमेण हेतुत्वापेक्षया लाघवेन सोपाधित्वाद्यविषयकं यत्किञ्चिदुक्तग्रहमुपादाय तद्व्यक्तिविरोधित्वेनैव हेतुत्वापत्तेः न चेष्टापत्तिस्तत्रैव ग्रन्थतात्पर्य्यसम्भवादिति वाच्यं, तथासति तादृशानन्तव्यक्तीरुपादाय प्रत्येकं तत्तद्ग्रहविरोधित्वेनानुमितिहेतुतायामनन्तकार्य्यकारणभावापत्तेः (२२) विरोधितावच्छेदकभेदेनैव विरोधित्वस्यापि भिन्नत्वात्ताद्रूप्येणानुगमासम्भवाच्च इत्यस्वरसादाहदन्तीत्युक्तं। अज्ञानरूपासिद्ध्युपजीव्यतया (२३) व्यभिचारस्य नाभासत्वं, किन्तु व्याप्तिधीविरोधित्वेन, तच्चोपाधित्वज्ञानस्य नास्तीत्युपाधिर्नाभास इतिमूलाभिप्रायं प्रकाशयन्नाह व्यभिचाराज्ञानस्येति। ननूपाधिधर्म्मिकसाध्यव्यापकत्वादि ज्ञानस्य भिन्नधर्म्मिकतया हेतोर्व्याप्तिग्रहाविरोधित्वेऽपि हेतुधर्म्मिकसोपाधित्वज्ञानस्य व्याप्तिधीविरोधित्वसम्भवात् नहि अन्यस्येत्यादिमूलमयुक्तमतस्तदपि दूषयति सोपाधित्वेति। न व्याप्तीति। न साक्षाद्व्याप्तिधीविरोधिनौ इत्यर्थः। ननु परम्परयावि-

---

२२। ननु प्रामानिकमानन्त्यं न दोषाय इत्यतोदोषान्तरमाह विरोधितेत्यादिना।

२३। अनुमित्यभावप्रयोजकत्वं नेत्यर्थः।

रोधिन एव सोपाधित्वस्य कुतोनाभासत्वमत आह वक्ष्यते इति, नचानौपाधिकत्वइत्यादिमूलस्य हेत्वनभिधानान्न्यूनतामपाकर्त्तु-माह निरुपाधित्वस्येति। तथात्वेपि। निरुपाधित्वधियो व्याप्तिग्राहकत्वेऽपि, आभासत्वायोगादिति। अनुमितौ तत्कारणपरामर्शेवा तस्याविरोधित्वादिति भावः। तदघटितेति। हेतुमन्निष्ठान्योन्याभावघटितेत्यर्थः। केवलान्वयित्वादिति। तथाच तस्य प्रतियोगिवृत्तित्वात् हेतुसमानाधिकरणो यः प्रतियोग्यवृत्ति-घटाद्यन्योन्याभावस्तत्प्रतियोगितानवच्छेदकमेव साध्यवत्त्वमतः संयोगि सत्त्वादित्यत्रातिव्याप्तिरिति भावः। यद्यपि प्रागुक्तक्रमेण हेतुसमानाधिकरणस्य द्रव्यभेदस्यैव पारिभाषिकप्रतियोगितावच्छेदकं संयोगवत्त्वमतोनातिप्रसङ्गस्तथापि यत्रासङ्गे तु विशेषे साध्यतावच्छेदकं न प्रतियोगितावच्छेदकं तत्रैव पारिभाषिकावच्छेदकत्वप्रवेशो न सर्व्वत्रेत्यभिप्रेत्यगुरुधर्म्मस्यापि वा प्रतियोगितावच्छेदकत्वमाहत्य इदमुक्तं। इदन्तु चिन्त्यते स्वप्रतियोगित्वावच्छिन्नभिन्नं यद्धेत्वधिकरणं तन्निष्ठान्योन्याभावोक्तौ (२४) न कोपि दोषः, वृक्षे संयोगिभेदसत्त्वेऽपि तत्प्रतियोगित्वावच्छिन्नभेदविरहादेव संयोगी तत्त्वादितत्रादावव्याप्तिविरहात्, वृक्षः संयोगिभेदप्रतियोगी नेतरप्रतययात् प्रतियोगिभेदेऽपि लाघवेन प्रतियोगित्वस्यैक्यात् सत्त्ववति गुणादौ च संयोगिभेदप्रतियोगित्वावच्छिन्नस्यापि भेदसत्त्वात् संयोगीसत्त्वादित्यादावतिव्याप्त्यनवकाशात् अस्तुवा यद्यत्स्वप्रतियोगि तत्तद्वृत्तित्वावच्छिन्नभेदकूट-वद्धेत्वधिकरणवृत्तिरन्योन्याभावो व्याप्तिघटकस्तथापि न क्षतिः,

२४। भूतत्वमूर्त्तत्वोभयत्वसाध्यकभूतत्वमूर्त्तत्वान्यतरत्वहेतौ साध्यवद्भेदस्य हेत्वधिकरणे केवलं मूर्त्तत्वादौ सत्त्वेऽपि तादृशभेदीयप्रतियोगिभेदस्यासत्त्वात्, साध्यवद्भेदस्य लक्षणाघटकत-

संयोगिभेदप्रतियोगितावच्छेदकत्वेनैव भेदस्य तद्वत्त्वे विरहेण संयोगीतत्त्वादित्यादावव्याप्त्युदासादिति। साध्यभेदेन व्याप्तेर्भेदस्यावश्यकत्वात् सर्वत्रैकनिरुक्त्यभावेऽपि न क्षतिरित्याशयेन शंक्यते अथेति। स्वव्यापकेति। हेतुमन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकीभूतसाध्यसामानाधिकरण्यमित्यर्थः। स्वव्यापकतेति। स्वं प्रकृतसाध्यं तद्व्यापकतावच्छेदकं तद्वन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकतानवच्छेदकं यद्रूपमधिकरणतानिरूपकतावच्छेदकीयोधर्मस्तदवच्छिन्नात्यन्ताभावासामानाधिकरण्यमित्यर्थः। तेन नान्योन्याभावगर्भत्वहानिः गगनत्वादेर्निरुक्तव्यापकतावच्छेदकत्वेऽपि अधिकरणतानिरूपकतावच्छेदकत्वविरहाद्यद्रूपपदेनैव वारणमतस्तदवच्छिन्नाभावसामानाधिकरण्यस्य धूमादौ सत्त्वेऽपि वह्निमान् धूमादित्यादौ नाव्याप्तिः। उक्तापेक्षया लाघवादाह तादृशरूपविशिष्टेति। साध्यव्यापकतावच्छेदकरूपावच्छिन्नेत्यर्थः, तथाच साध्यवन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकरूपावच्छिन्नान्योन्याभावासामानाधिकरण्यं फलितं। नच तादृशपृथिव्यन्योन्याभाववति कालिकादिसम्बन्धेन धूमादेः सत्त्वात् वह्निमान् धूमादित्यादावव्याप्तिः (२५) हेतुतावच्छेदकसम्बन्धेन वृत्तित्वे तु सत्तावान् द्रव्यत्वादित्यादावव्याप्तिः सत्तावदन्यसमवेतत्वाप्रसिद्धेरिति वाच्यं, तादृशरूपावच्छिन्नान्योन्याभावाधिकरणावृत्तित्वाधिकरणताकत्वस्य विवक्षितत्वात्। अतएव विशिष्टसत्ताया

---

याऽतिव्याप्तिनिरासाय तादृशप्रतियोगितावच्छेदकावच्छिन्नभिन्नत्वं वक्तव्यं अत्यन्ताभावघटितव्याप्तौ प्रतियोग्यनधिकरणत्वघटकाधिकरणत्वस्याधिकस्य निवेशाद्गौरवमिति केचिद्वदन्तीति ध्येयं।

२५। वह्निमान् गगनादित्यादौ लक्षणगमनान्नासम्भव इतिध्येयं।

द्रव्यान्यवृत्तित्वेऽपि द्रव्यं विशिष्टसत्त्वादित्यादौ नाव्याप्तिः विशिष्टसत्तानिरूपिताधिकरणत्वस्य द्रव्यान्यवृत्तित्वाभावात्, संयोगी सत्त्वादित्यादौ तादृशसाध्यव्यापकतावच्छेदकीभूतद्रव्यत्वावच्छिन्नान्योन्याभाववद्वृत्तित्वस्यैव सत्ताधिकरणतायां सत्त्वान्नातिप्रसङ्ग इति भावः। स्मृतीत्यादि। स्मृतिविषयत्वं संस्कारविषयत्वं जन्यज्ञानविषयत्वञ्च केवलान्वय्यपि महाप्रलयावच्छेदेन परमाण्वादावसत्त्वादव्याप्यवृत्त्येव, प्रलये परमाण्वादिर्नस्मर्य्यते इत्यादिव्यवहारात् तथाच तत्तत्साधकद्रव्यत्वादिहेतावव्याप्यवृत्तिसाध्यकस्थलीयलक्षणयोरव्याप्तिः। प्रथमेऽभावत्वादेरेव साध्यव्यापकतावच्छेदकतया तदवच्छिन्नात्यन्ताभावाप्रसिद्धेः, द्वितीये चाभावत्वादेरेव निरुक्तसाध्यव्यापकतावच्छेदकत्वात्तदवच्छिन्नान्योन्याभावाप्रसिद्धेरिति भावः। उद्बोधकनियम्यायाः स्मृतेः सार्व्वत्रिकत्वे मानाभावात् संस्कारविषयत्वोपादानं। नियतोपेक्षाग्रहविषयत्वेन संस्काराविषयस्यापि वस्तुनः सम्भावितत्वात् जन्यज्ञानविषयत्वानुधावनं। सर्व्वदैव सर्व्वत्र नित्यज्ञानविषयतासत्त्वादव्याप्यवृत्तित्वसम्पत्तये जन्यज्ञानपदं। कागतिः। कथमव्याप्त्युद्धारः। स्वाधिकरणेति। स्वं हेतुः संयोगी सत्त्वादित्यादौ संयोगवत्त्वस्यापि साध्याधिकरणद्रव्यवृत्तित्वात् तदवच्छिन्नभेदमादायातिव्याप्तिवारणं न स्यादतो यत्किञ्चिदिति। तथाच संयोगवत्त्वावच्छिन्नभेदस्यापि साधनवद्गुणवृत्तिधर्म्मानवच्छिन्नप्रतियोगिताकत्वात्तत्प्रतियोगितावच्छेदकमेव तत्र साध्यवत्त्वमतो नातिप्रसङ्गः। नच यत्किञ्चित्त्वस्यैकस्याभावात् साधनाधिकरणद्रव्यमन्तर्भाव्यातिव्याप्तितादवस्थ्यं, संयोगिभेदस्य साधनाधिकरणैकव्यक्तिवृत्तिधर्म्मावच्छिन्नप्रतियोगिताकत्वेऽपि तादृशव्य-

त्यन्तरवृत्तिधर्म्मानवच्छिन्नप्रतियोगिताकत्वे बाधकाभावात्, साधनाधिकरणतत्तदन्यतमवृत्तिधर्म्मानवच्छिन्नप्रतियोगिताकान्योन्याभावप्रतियोगितावच्छेदकत्वाभावकूटवत्त्वस्यैव निविष्टत्वाददोष इत्यपि कश्चित्। साधनाधिकरणयत्किञ्चिदन्यतमवृत्तिधर्म्मावच्छिन्नप्रतियोगिताकत्वोक्तौ संयोगी वृक्षत्वादित्यत्राऽव्याप्तिः, संयोगवत्त्वावच्छिन्नभेदस्य वृक्षावृत्तिसंयोगीनाप्यवच्छिन्नप्रतियोगिताकत्वादतस्तत्परित्यागः। यद्यपि रूपाभाववान् घटत्वादित्यत्राऽव्याप्तिः, रूपसामान्याभावावच्छिन्नान्योन्याभावात्मकस्य रूपस्यैव समवेतसामान्याभावत्वावच्छिन्नप्रतियोगिताकतया साधनवद्वृत्तिधर्म्मानवच्छिन्नप्रतियोगिताकत्वात् तथापि स्वाधिकरणयत्किञ्चिदन्यतमवृत्तिधर्म्मानवच्छिन्नं यदन्योन्याभावप्रतियोगित्वं तदनवच्छेदकसाध्यवत्त्वे तात्पर्य्यं, साध्यवत्त्वञ्चात्र साध्यतावच्छेदकधर्म्मावच्छिन्नसाध्यमात्रं न तु तदवच्छिन्नाधिकरणत्वं तथा-सति दैशिकविशेषणतया हेत्वधिकरणवृत्तित्वनिवेशस्यैव निर्दोषत्वेन वक्ष्यमाणातिव्याप्तप्रसङ्गत्यापत्तेरिति ध्येयम्। नच कालो घटवान् महाकालत्वादित्यादौ तादृशान्योन्याभावाप्रसिद्धिरिति वाच्यं, विषयितासम्बन्धेनावृत्तिगगनादिमतो भेदस्यैव तथात्वादिति भावः। ननु इदं संयोगि विशिष्टसत्त्वादित्यादावव्याप्तिः संयोगवत्त्वावच्छिन्नभेदस्य साधनीभूतसत्त्वाधिकरणवृत्तिधर्म्मानवच्छिन्नप्रतियोगिताकत्वादत आह तद्धर्म्मविशिष्टेति। प्रकृत हेतुतावच्छेदकविशिष्टेत्यर्थः निरुक्तसाध्यवत्त्वकत्वं रासभादिसाधारणमत उक्तं तद्धर्म्मविशिष्टत्वं वेति। स्वरूपसम्बन्धेनेति। कालिकसम्बन्धेनेत्यर्थः। तद्वत्त्वस्येति। तथा च तादृशहेत्वधिकरणयत्किञ्चिद्विद्यमानस्पन्दादिवृत्तिधर्म्मानवच्छिन्नप्रतियोगिता-

को यच्चिरातीतघटादिमद्भेदस्तत्प्रतियोगितानवच्छेदकत्वादित्यर्थः ( २६ ) जातिमत्त्वेनेति। तथाच हेत्वधिकरणं यद्घटादिकं तत्समवेतानवच्छिन्नप्रतियोगिताकस्य घटादिभेदस्य प्रतियोगितानवच्छेदकमेव जातिमत्त्वमित्यतिव्याप्तिरितिभावः। ननु साधनवति सामान्यादौ जातिमत्त्वावच्छिन्नभेदसत्त्वान्नातिव्याप्तिरत आह जातिशून्येति। अप्रसिद्धत्वादिति। तथा च सामान्यादौ समवेतत्वाप्रसिद्ध्यै व तादृशसाधनाधिकरणं न लक्षणघटकमिति भावः। एतेनेति। व्याख्यातोदुष्टत्वेन। तथाच ग्राह्याप्रसिद्ध्या ग्रहस्य प्रमात्वं कुत्रापि न स्यादिति भावः। तथात्वे। अन्योन्याभावस्याव्याप्यवृत्तित्वे। अव्यापकमेवेति। संयोगवत्त्वावच्छिन्नभेदस्याप्युत्पत्तिकालावच्छेदेन घटादौ सत्त्वादिति भावः। प्रतियोग्यधिकरणं यद्यत्तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वेन हेत्वधिकरणस्य प्रवेशे तु नैष दोष इत्यवधेयं। स्वाधिकरणेतरादि। प्रकृतहेत्वधिकरणयत्किञ्चिद्व्यक्तिनिष्ठाधिकरणतानिरूपकतावच्छेदकधर्म्मानवच्छिन्नं यदत्यन्ताभावप्रतियोगित्वं तदनवच्छेदकीभूतसाध्यतावच्छेदकधर्म्मावच्छिन्नसामानाधिकरण्यमितरार्थस्तेन विशिष्टसत्ताया गुणवृत्तित्वेऽपि विशिष्टसत्तावान् जातेरित्यादौ नातिव्याप्तिर्नवा प्रागुक्तरीत्या रूपसामान्याभाववान् घटत्वादित्यादावव्याप्तिः। पूर्व्ववदिति। सम्बन्धसामान्येन हेत्वधिकरणवृत्तित्वस्योक्तौ गुणः स्पन्दत्वादित्यत्र साध्यतावच्छेदकसम्बन्धेन तथात्वोक्तौच जातिमान्मेयत्वादित्यत्रातिव्याप्तिरित्यर्थः। स्वप्रतियोगीति। स्वप्रतियोगितावच्छेदकध-

---

२६। तत्स्पन्दस्य चतुर्थक्षणपर्य्यन्तस्थायितया स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोगिरूपातीत-

र्म्मावच्छिन्नाधेयत्वानिरूपकहेत्वधिकरणनिष्ठाभावीयं यत्प्रतियोगित्वं तदनवच्छेदकेत्यर्थः, तेन विशिष्टसत्तावान् जातेरित्यादौ नातिव्याप्तिः। आधेयत्वञ्च साध्यतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यं, नातो गुणःस्पन्दत्वादित्यादावतिव्याप्तिः। जन्यानामिति। संयोगनिष्ठाधेयत्वानिरूपकत्वोपगमे इत्यन्वयः। द्रव्यत्वस्य हेतुतास्थले उत्पत्तिप्रलयोभयावच्छेदेन हेतुमतः साध्यनिष्ठाधेयत्वानिरूपकत्वं सम्भवत्यतो यादृशहेतुतास्थले प्रलयावच्छेदेनैव तद्वतः साध्यनिष्ठाधेयत्वानिरूपकत्वं तदुदाहरति कालपरिमाणेति। संयोगसाध्यक इत्यनुषज्यते। यावत्साध्यव्यापकसाधनव्यापकत्वरूपानौपाधिकत्वव्याप्तिं निष्कृष्य सिद्धान्तयति साध्यसमानाधिकरणेत्यादिना, अत्र प्रतिपदव्यावृत्तिर्व्याप्तिवाद एव प्रागुक्ता। अनवच्छेदकत्वेत्यत्राभावद्वयप्रवेशे गौरवादाह स्वसमानाधिकरणेत्यादि। (२७) तत्सम्बन्धावच्छिन्नेत्यादेरप्रवेशे लाघवादाह स्वसमानाधिकरणाः सर्व्व इत्यादि। यद्धर्म्मावच्छिन्नसामानाधिकरण्यत्वं हेतुसामानाधिकरण्यवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकं तद्धर्म्मावच्छिन्नसामानाधिकरण्यमित्यर्थः। व्यापकत्वं विना यावत्त्वस्य दुर्व्वचत्वादिति ध्येयं।

---

घटस्यापि कालिकेन तत्स्पन्दवृत्तित्वे नातीतघटादिमद्भेदस्य लक्षणाघटकत्वमतस्थिरपदमिति ध्येयं।

२७। ननु हेतुमन्निष्ठाभावप्रतियोगितात्वव्यापक साध्यवन्निष्ठाभावनिरूपितत्वोक्तौ सम्यक्तु गुरुतरनिवेशे शिरोमणेः कथं न न्यूनत्वं चेन्न, निरूपितव्यक्तिभेदेन निरूपितत्वस्य नानात्वे कस्यापि निरूपितत्वस्य तादृशप्रतियोगितात्वाव्यापकत्वाद्गुरुतरलक्षणकरणात्, नच, तादृशप्रतियोगितात्वव्यापकसाध्यतावच्छेदकावच्छिन्नवन्निष्ठाभावप्रतियोगितात्वकत्वमित्युक्त्यैव सामञ्जस्यमिति वाच्यं, प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तेस्तथाच प्रमेयधूमत्वघटितप्रतियोगितात्वत्वस्य गुरुतया व्यापकतावच्छेदकत्वात् तत्र लक्षणगमनसम्भवात्, प्रकृते च साध्यवन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्म्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं तत्त्वं तादृशप्रतियोगितायावती व्यक्तिस्तत्तदवच्छेदकत्वान्यतमत्वा स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वव्यापकमित्यर्थकत्वे न कश्चिद्दोष इति ध्येयं।

(२८) अत्र सामानाधिकरण्यस्याऽव्याप्यवृत्तितायाः प्रामानिकत्वे धूमादिसमानाधिकरणस्य घटाभावादेः वह्न्याद्यनधिकरणदेशावच्छेदेन वह्नित्वाद्यवच्छिन्नसामानाधिकरण्यविरहाद्वह्निमान् धूमादित्यादावव्याप्तिः (२९) नच हेतुसमानाधिकरणत्वं निरवच्छिन्नविशेषणतया वाच्यमतो नोक्तदोषः, साधनीभूतधूमाद्यधिकरणावच्छेदेनैव वस्तूनां तत्सामानाधिकरण्यवत्त्वेन निरवच्छिन्नविशेषणतया धूमसामानाधिकरण्यस्यैवाप्रसिद्धेः (३०) अतो गुर्व्वपि लक्षणान्तरमाह साध्यसामानाधिकरण्याभावेति। (३१) अत्र व्यापकताघटकसाध्यसामानाधिकरण्याभाववत्त्वं निरवच्छिन्नविशेषणताविशेषेण ग्राह्यं, तेन घटाद्यभावस्य वह्न्याद्यनधिकरणदेशावच्छेदेन वह्न्यादिसामानाधिकरण्याभाववत्त्वेऽपि वह्निमान् धूमादित्यादौ नाऽव्याप्तिः धूमवान् वह्नेरित्यादौतु निरवच्छिन्नविशेषणतया साध्यसामानाधिकरण्याभावस्याश्रये तप्तायःपिण्डत्वादौ तत्प्रकारकप्रमाविषत्वादौ वा हेतुसामानाधिकरण्यस्या

---

२८। ननु हेत्वधिकरणे निरवच्छिन्नवृत्तिकाभावप्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके विवक्षणेनैव कपिसंयोग्येतद्वृक्षत्वादित्यादावव्याप्तिवारणसम्भवे हेतुसामानाधिकरण्यव्यापकत्वस्य साध्यसामानाधिकरण्ये ऽनुसरणं दीधितिकृतोऽनुचितं चेन्न, अभावत्वरूप--व्याप्यवृत्तिसाधारणरूपेणाव्याप्यवृत्त्यभावस्य व्याप्यवृत्तित्वमतेऽभावत्वेन कपिसंयोगाभावस्य निरवच्छिन्नवृत्तिकत्वसम्भावनयैव तादृशलक्षणपरित्यक्तत्वादिति भाव्यं।

२९। असम्भवस्तु न भवति वाच्यं ज्ञेयत्वादित्यादौ वाच्यत्वानधिकरणदेशाप्रसिद्धया वाच्यत्वसामानाधिकरण्याभावस्याव्याप्यवृत्तित्वासम्भवेन लक्षणसमन्वयादिति।

३०। अथ हेतुसामानाधिकरण्यस्याव्याप्यवृत्तित्वेऽपि हेतुसामानाधिकरण्यत्वस्य व्याप्यवृत्तितया हेतुसामानाधिकरण्यत्वव्यापकत्वस्य साध्यसामानाधिकरण्यत्वे विवक्षायां सामानाधिकरण्यस्याव्याप्यवृत्तित्वनिबन्धनो दोषः कथं नोपेक्षितः, चेन्न,--गुरुधर्म्मस्यानवच्छेदकत्वे प्रमेयधूमवान् वह्नेरित्यादावतिव्याप्तेरिति विभावनीयं।

३१। अथ हेतुसामानाधिकरण्यवन्निष्ठत्वस्य व्यापकताघटकस्य निरवच्छिन्नत्वनिवेशेनैव पूर्व्वलक्षणपरिष्कारसम्भवे लक्षणान्तरानुसरणमनुचितं, चेन्न, हेतुसामानाधिकरण्यवन्निष्ठत्वस्यापि सामानाधिकरण्यरूपतया सामानाधिकरण्यमात्रस्याव्याप्यवृत्तित्वमते तस्यापि निरवच्छिन्नस्याप्रसिद्धेरिति॥ अत्र काशीशङ्करादयः, हेतुसामानाधिकरण्यवन्निरूपितनिरवच्छिन्नस्वरूपसम्बन्धावच्छिन्नवृत्तित्वस्य हेतुसामानाधिकरण्यवन्निष्ठनिरवच्छिन्नाधिकरणताकत्वस्य वा व्यापक

भावविरहान्नातिव्याप्तिरिति ध्येयं। साध्यतेति। घटत्ववान् मेयत्वादित्यादौ कालिकसम्बन्धेन यत्साध्याधिकरणं तदवृत्तिरवृत्तिरेवेति तत्र मेयत्वसामानाधिकरण्याभावसत्त्वेऽपि नातिव्याप्तिः। हेतुतेति। तेन रूपवान् घटत्वादित्यादौ साध्यसमानाधिकरणस्य महाकालत्वादेः कालिकसम्बन्धेन यद्घटत्वाद्यधिकरणं तद्वृत्तित्वेऽपि नाव्याप्तिः। ननु द्रव्यं सत्त्वादित्यादावतिव्याप्तिः, साध्यवत्कालवृत्तित्वाभावस्यावृत्तिगगनादावेव सत्त्वेन तत्र हेतुसामानाधिकरण्याभावस्यापि सत्त्वात्, नच दैशिकविशेषणतासम्बन्धेनैव साध्यवद्वृत्तित्वं निवेश्यमिति नोक्तदोषः, तथासति तादृशवृत्तित्वाद्यभाववति पर्व्वतत्वादौ समवायादिना हेतुमद्वृत्तित्वस्य सत्त्वेन वह्निमान् धूमादित्यादावव्याप्तेरत आह वृत्तिद्वयञ्चेति। साध्यवद्वृत्तित्वं हेत्वधिकरणवृत्तित्वञ्चेत्यर्थः। एकेनेति। यत्सम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वं लक्षणघटकं तत्सम्बन्धावच्छिन्नमेव हेतुमद्वृत्तित्वं निवेश्यमित्यर्थः। यत्तदर्थयोरननुगतत्वात् समवायेन तादृशवृत्तित्वद्वयस्याभावमादाय सत्तावान्मेयत्वादित्यादावतिव्याप्तिरतआह विशेषणतेति॥ इतिमहामहोपाध्यायश्रीयुक्तजगदीशतर्कालङ्कारभट्टाचार्य्यविरचितव्याप्त्यनुगमटीका समाप्ता॥

---

तावद्घटकाभावविशेषणत्वे पूर्व्वलक्षणमेव सम्यक्। तन्न, इत्यालोच्य गुर्व्वपीत्यपिकारेण तादृशलघुलक्षणस्यापि सूचितत्वादिति ध्येयं, वस्तुतस्तु, गुरुधर्म्मस्य प्रतियोगितानवच्छेदकत्वे प्रमेयधूमवान् वह्नेरित्यादौ पूर्व्वलक्षणेऽतिव्याप्तिः, प्रमेयधूमत्वघटितसामानाधिकरण्यस्य धूमत्वघटितसामानाधिकरण्यापेक्षया गुरुत्वेन हेतुसामानाधिकरण्याव्यापकतावच्छेदकत्वादतो गुरुतरलक्षणानुसरणं, एतल्लक्षणस्य साध्याधिकरणवृत्तयो यावन्तस्तत्तद्व्यक्तिभेदकूटव्यापकतावच्छेदकत्वं हेतुसमानाधिकरणतत्तद्व्यक्तिभेदकूटत्वे इत्यर्थकतया न दोष इति वर्णयन्ति॥ एतत्सर्व्वं सुधीभिरालोचनीयमिति संक्षेपः।

इति श्रीमन्नदाचरणतर्कवागीशकृतप्रभाग्रन्थे व्याप्त्यनुगमटिप्पणी समाप्ता॥

श्रीदुर्गा ।

पण्डितमण्डलीमण्डनायमान-महामहोपाध्याय श्रीयुक्तराखालदास-न्यायरत्न-महाशयानां सुप्रथित-यशःपण्डितस्य श्रीयुक्त-बामाचरण-तर्कभूषणमहाशयस्य श्रीयुक्तश्रीशङ्कर-तर्करत्नमहाशयस्य च—

# प्रशंसापत्रम् ।

फरिदपुरमण्डलान्तर्गत--मूलग्रामनिवासी श्रीमदन्नदाचरण तर्कवागीशस्तर्कशास्त्रलब्धव्युत्पत्तिकः स्वदेशे छात्रानन्नदानेन सानुरागमध्यापयति ।

अनेन सुप्रसिद्धपण्डितचन्द्रनारायण कालीशङ्करादिनिर्म्मित-पूर्व्वतनपत्रिकामवलम्ब्य व्यधिकरणधर्म्मावच्छिन्नाभावस्य व्याप्त्यनुगमस्य च प्रभा नाम्नी कापि टिप्पणी लिखिता । प्राचीन-क्रोड़पत्रसारसङ्ग्रहीभूतया पत्रिकपाऽनया विद्यार्थिनां महोपकारो जनयिष्यते ।

शास्त्रानुभव सौजन्यादिविविधगुणगणभूषितोऽयं काले सुप्रसिद्धनैयायिको भविष्यतीत्यनुमन्यते ।

स्वा० श्रीराखालदासदेवशर्म्मणा ।

स्वा० श्रीबामाचरणशर्म्मणा । स्वा० श्रीश्रीशङ्करदेवशर्म्मणा ।

Printed by A. K. Mukerji at the Mahalakshmi Press, Harabag, Benares.